

अप्रकाशितपूर्वः

# कथाकोशः

जैनलिपिलिखितानि प्राचीनपत्रादर्श-
पुस्तकानि पर्यालोच्य

श्री पण्डित जगदीशलाल शास्त्री,
एम. ए., एम. ओ. एल.

इत्येतेन

सम्पादितः प्रकाशितश्च

उपोद्घातपरिशिष्टाभ्याञ्च सुपरिष्कृतः।

१६४२

# विषयानुक्रमणिका

# उपोद्धातः

## कथाकोशस्यादर्शपुस्तकद्वयीप्राप्तिः

कथाकोशस्येदं संस्करणं प्राचीनपत्रादर्शपुस्तकद्वयीमधिकृत्याश्रितम्। तत्रै-कस्यादर्शग्रन्थस्य 'अ' (=A) इति व्यपदेशः, अपरस्य 'ज' (Z) इति। अकार-व्यपदेशभाग् आदर्शग्रन्थः पञ्चनदप्रान्तवर्तिनः अम्बालानगरस्य जैनभाण्डागारे वर्तते। जकारसंज्ञावांश्च पञ्चनदप्रान्तवर्तिनः जीराग्रामस्य जैनभाण्डागार इति। एषाऽऽदर्शग्रन्थद्वयी तु पाञ्चनदविश्वविद्यालयाध्यक्षनियोगतः पाञ्चनदजैनभाण्डागारस्थ-हस्तलिखितपुस्तकानां सूचीं संकलयता मया निर्दिष्टभाण्डागारयोर्निरीक्षिता। तथा च श्रीमोतीलालबनारसीदासेति नाम्ना विश्वविख्यातस्य पाञ्चनदसंस्कृतपुस्तकालयस्या-ध्यक्षैः तत्रभवद्भिः श्रीसुन्दरलालशान्तिलाल इत्येतैः मदर्थे महता यत्नेनाऽऽसादिता। 'रत्नं समागच्छतु काञ्चनेन' इति न्यायमनुसरता मयापि जैनधर्मरत्नस्यास्य कथा-कोशस्य सुविशदैर्निर्णयसागरसीसकाक्षरैर्मुद्रणादिकं स्यादिति कृतेऽयं ग्रन्थो लवपुरप्रसिद्धे 'बाम्बे संस्कृत प्रेस' इति नाम्नि मुद्रणालये भूयसा व्ययेन प्रकाशितः।

## कथाकोशस्यादर्शपुस्तकद्वयीविवरणम्

अकारव्यपदेशभाक् कथाकोशस्यादर्शपुस्तकम् अम्बालानगरस्थजैनभाण्डा-गारे सुरक्षितम्। तदेतत्पाञ्चनदजैनभाण्डागारस्य ग्रन्थसंख्यायां षट्त्रिंशदधिकचतुश्शती-संख्यामभिव्याप्य वर्तते। अस्य परिमाणम् १२"×५३/४", पत्राणि ८१, पङ्क्तयः १५, अक्षराणि ६०। एतच्च जैनलिप्यां लिखितम्।

अथेदमित्थमारभ्यते—ॐ नमो वीतरागाय नमः। यांति दुष्टदुरितानि दूरतः कुर्वते सपदि संपदः पदं भूषयंति भवनानि कीर्तयः पूजया विहितया जगद्गुरोः १ पूर्वं श्रीवीतरागपूजाकथा। अस्मिन् जम्बूद्वीपे भरतक्षेत्रे शंखपुरे नगरे श्रीशंखो नाम राजा।

इत्थञ्चात्र समाप्तिः—नलो मृत्वा कुबेरो जातः। दवदन्ती मृत्वा तस्य भार्या बभूव। किञ्चिद्विराधनात्वीचदेवत्वं प्राप्तम्। द्वावपि कर्म क्षपयित्वा क्रमेण मोक्षं यास्यतः। इति द्यूतविषये नलकथानकं समाप्तं॥

एतदादर्शपुस्तकलेखकेन स्वविषये ग्रन्थलेखनकालविषये चेत्थमलेखि—

संवत् १६४५ रा मिति असाढशुदी १५ पूर्णमास्यां भृगुवासरे ॥ लिषापितं मुनी जी आत्माराम जी ॥ लिपिकृतं बाबा बालगिरी जी ॥ ६ ॥

कथाकोशस्यैतस्मादादर्शपुस्तकात्प्राचीनतरमादर्शपुस्तकं जीराजैनभाण्डागारे विद्यते। तच्चात्र जकारव्यपदेशभाक्। पाल्हनदजैनभाण्डागारसंख्यया चास्य पञ्च-त्रिंशदधिकचतुश्शती संख्याऽस्ति। अस्य परिमाणम् १०½"×५", पत्राणि ६०, पङ्क्तयः १६, वर्णाः ५५। जैनलिप्यां लिपीकृतम्।

अथेदमित्थमारभ्यते—ओं नमो वीतरागाय नमः॥ यान्ति दुष्टदुरितानि दूरतः कुर्वते सपदि सम्पदः पदम्। भूषयंति भवनानि कीर्तयः पूजया विहितया जगद्गुरोः॥

अथेयमत्र समाप्तिः—नलो मृत्वा कुबेरो जातः। दवदन्ती मृत्वा तस्य भार्या बभूव। द्वावपि कर्म क्षपयित्वा मोक्षं यास्यतः। इति द्यूतविषये नलकथानकं समाप्तं॥

ग्रन्थसमाप्त्यनन्तरञ्चास्मिन्नादर्शपुस्तके ग्रन्थविषयानुक्रमणिकापि वर्तते। सा चेत्थम्—श्रीवीतरागपूजायां धनदकथानकम् १ देवपूजाविषये देवपालकथानकम् २ कोपविषये कुणालायाम् ऋषिकथानकम् ३ कोपविषये संवरमुनिकथानकम् ४ लोभ-विषये अशोकश्रेष्ठिकथानकम् ५ प्रस्तावोक्तौ पुण्डरीकयशोभद्रकथानकम् ६ शीलव्रते मदनरेखाकथानकम् ७ अष्टाह्निकाविषये नागदत्तकथानकम् ८ तपोविषये सनत्कुमार-कथानकम् ६ भावनायाम् अमरचन्द्रकथानकम् १० अक्षतपूजायां शुककथानकम् ११ गन्धपूजायां मदनावलीकथानकम् १२ नैवेद्यविषये हालिककथानकम् १३ दीप-पूजायां दीपशिखकथानकम् १४ दाने धन्यकथानकम् १५ आरामशोभाकथानकं पूजायाम् १६ शीलविषये ऋषिदत्ताकथानकम् १७ जीवदयायां मेतार्यकथानकम् १८ नमस्कारविषये रत्नशिखकथानकम् १९ कषायविषये अमरदत्तमित्रानन्दकथा-नकम् २० अमरसेनराजकथानकम् २१ ललिताङ्गकथानकम् २२ जीवदयायां दामन्नक-कथानकम् २३ गुरुविराधनायां कूलबालककथानकम् २४ सुपात्रदानविषये कनकरथ-कथानकम् २५ माने बाहुबलिकथानकम् २६ द्यूते नलराजकथानकम् २७ इति श्री-कथाकोशः समाप्तः॥

ग्रन्थलिपिकर्तारं ग्रन्थलिपिसमयञ्चोरीकृत्य किमपि निर्दिष्टमस्ति। तद् यथा—

संवत् १८५६ वर्षे मिती कार्तिकमासे कृष्णपक्षे १३ तिथौ शनिवासरे श्री कीर्तिरत्नसूरशाखायां वा श्री श्री श्री १०८ श्री ग्यांनप्रमोदजी गणि गजेन्द्राणा तत् शिष्य श्री १०५ श्रीदांनभक्ति जी गणि तत्शिष्य श्री १०१ श्रीषुश्यालहेमजी तत् शिष्य पं० देवचन्द लिपीकृतं॥ फरीदकोटमध्ये चतुर्मासीकृतः श्रीः। यादृशं पुस्तके

दृष्ट्वा तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ ॥ कुले रचेत् थले रचेत् रचेत् शिथिलबन्धनात्। मूर्खहस्ते न दातव्यम् एवं वदति पुस्तकं ॥ २ ॥ सर्वमंगलमांगल्या सर्वकल्याणकारणं। प्रधानं सर्वधर्माणां जैनं जयतु शासनं ॥ ३ ॥ श्रीरस्तु, कल्याणमस्तु, श्रीः, शुभं भूयात्। श्रीः ॥

## कथाकोशस्य कर्तृत्वविचारः, रचनासमयनिर्धारणञ्च

ग्रन्थस्यादावन्ते वा ग्रन्थकर्तारः प्रायशः स्वपरिचायकं किञ्चिदुपनिबध्नन्ति। परन्तु कथाकोशकर्त्रा न क्वचिदपि स्वनामाद्युपनिबद्धम्। नचान्यत्र कुत्रापि कथाकोशकर्तृत्वेन कस्यापि कवेर्नाम समुपलभ्यते। तदेवं प्रमाणाभावेन कथाकोशस्य कर्तृत्वनिर्धारणा कष्टैव।

कथाकोशस्य निर्माणकालनिर्धारणमपि नैव सुकरम्, एतन्निर्माणकालोल्लेखस्य कुत्राप्यलब्धत्वात्। किन्तु केषुचित् स्थलेषु प्रयुक्ताः चीठीत्यादयो हिन्दीभाषाप्रयोगा अस्य ग्रन्थस्यार्वाचीनतां द्योतयन्ति।

## कथाकोशस्य भाषा

कथाकोशस्य भाषा सुविशदा मनोज्ञा च। गद्यस्थले संस्कृतमयी, पद्यस्थले क्वचित् संस्कृतमयी क्वचित्प्राकृतमयी। वाक्यरचना च अदुरूहार्थाभिसूचकैर्नातिविषमैरसमस्तैः पदैर्निबद्धा।

सन्त्यत्र केचिच्छब्दा विदुषां विचारणीयाः। यथा—कबाडिक ( ४, ६ ) मुत्कलितः ( ७, ७ ), चीठी ( २२, १ ) छिबितः ( २२, ३ ) कुट्यमानाम् ( ८४, ७ ) दब्बडक ( ६४, २३ ) इत्यादयः। किन्तु प्रकरणान्वयेनार्थावबोधकैः कतिपयैश्चेतरसंस्कृतैः शब्दैर्न कथाकोशस्य भाषावैशिष्ट्यं व्याहन्तुं शक्यम्।

अत्रेदं व्यक्तिगतं किञ्चिदावश्यकमवधेयम्—एतद्ग्रन्थस्य सम्पादनमुद्रणादिकार्यं विक्रमराज्यतः नवोत्तरनवत्यधिकैकोनविंशतिशततमे वर्षे भाद्रपदे मासे संवृत्तम्। तत्र वर्षाकाले एकान्तत एतन्नियोगाश्रयणात् कार्यसमाप्तिस्सुलभैवाभूत्। गुरुमप्येतत्कार्यभारं सामोदमुद्वोढुर्मम गुरवस्तत्रभवन्तो विद्याव्यसनिनः पञ्चनदविश्वविद्यालयाधिकृतसंस्कृतविभागाध्यक्षाः एम. ए. ( पंजाब ), डी. फिल. ( आक्सफोर्ड ) आफिसर् डी एकैडेमी ( फ्रान्स ), इत्याद्युपाधिभूषिता आचार्यवराः श्रीलक्ष्मणस्वरूपमहोदया एव परमादर्श इति निवेदयति

जगदीशलालशास्त्री

# कथाकोशः

ॐ नमो वीतरागाय ।

यान्ति दुष्टदुरितानि दूरतः कुर्वते सपदि सम्पदः पदम् ।
भूषयन्ति भवनानि कीर्तयः पूजया विहितया जगद्गुरोः ॥ १ ॥

## श्रीवीतरागपूजाकथा ।

अस्मिन् जम्बूद्वीपे भरतक्षेत्रे[1] शंखपुरे[2] नगरे श्रीशंखो नाम राजा । तत्र धनदनामा श्रेष्ठी वसति । सोऽतीव धनवान् । चत्वारः तस्य पुत्राः । अन्यदा तेन व्यवहारिणा लक्ष्मीं चञ्चलां विमृश्य श्रीवीतरागप्रासादः कारितः । तत्र बिम्बप्रतिष्ठा[3] कारिता महतोत्सवेन । अन्यदा पूर्वभवान्तरायकर्मवशान्निर्धनो बभूव । अतिनिर्धनत्वात्तं पुरं परित्यज्य तन्नगरासन्न एकस्मिन् ग्रामे परिवसति । नगरे यातायातेन सुतोपात्ताऽऽजीविकः कियन्तमपि कालमतिवाहितवान् । अथान्यस्मिन्नवसर आयाते चातुर्मासिकपर्वणि तत्र यायिभिः सुतैः समं स धनदः शंखपुरं प्राप्य निजप्रासादसोपानमधिरोहन् निजारामालिकयोपायनीकृतपुष्पचतुस्सरिकस्ताभिर्जिनेन्द्रमभ्यर्च्य रात्रौ गुरूणां पुर आत्मीयं दरिद्रभावं निन्दन् गुरुभिः कपर्दियक्षाऽऽकृष्टिमन्त्रो दद्दे । अन्यदा कृष्णचतुर्दश्यां मध्यरात्रौ तमेव मन्त्रमाराधयतस्तस्य पुरः कपर्दियक्षः प्रत्यक्षीबभूव । उक्तं च—'भो धनद[4] ! चातुर्मासिकावसरे श्रीवीतरागस्य पुष्पचतुस्सरपूजापुण्यफलं मे देहि ।' तेन कथितम्—'एकस्यापि पूजाकुसुमस्य फलं सर्वज्ञं विना दातुं न समर्थः' इति कारणात्तस्य साधर्मिकत्वात् कपर्दियक्षेण तद् गृहे चतुर्षु गृहकोणिकेषु सुवर्णपूर्णान् चतुरः कलशान्निधीकृत्यादृश्यत्वं

---

१. अस्मिन् जम्बूद्वीपे भरतक्षेत्रे is wanting in Z. २. Z. adds पुरा before शंखपुरे । ३. ०प्रतिकृति: for ०प्रतिष्ठा A. ४. A adds तुष्टोऽहं मार्गयस्व मनोवाञ्छितम् । ततः श्रेष्ठी प्रोवाच । यदि त्वं तुष्टोऽसि तर्हि after धनद ।

भेजे[1]। धनदः प्रभाते स्वगृहं गतः। धर्मनिन्दापरेषु नन्दनेषु तद्द्रव्यं समर्पयामास। तेऽप्यत्यादरात्पितुः पार्श्वात्तद्वैभवलाभहेतुमपृच्छन्। तेषां हृदि धर्मप्रभावाविर्भावाय[2] जिनपूजाप्रभावतः परितुष्टेन कपर्दियक्षेण प्रसादीकृतां तां सम्पदं निवेदयामास। तेऽपि सम्पन्नसम्पत्तयः तदेव जन्मनगरं समाश्रित्य निजधर्मस्थानसमारचनापरा जिनशासनप्रभावनां कुर्वन्तो वैधर्मिकाणामपि मनस्सु धर्मे निश्चलीकृतवन्तः॥

इति श्रीवीतरागपूजायां धनदकथानकम्॥

## देवपूजाविषये देवपालकथानकम्।[3]

जिनपूजनं जनानां जनयत्येकमपि सम्पदः सकलाः।
जलमिव जलदविमुक्तं काले सस्यश्रियो विपुलाः॥ १॥

अत्रैव भरते वसन्तपुरं नाम पत्तनम्। तत्र नाम्ना परिणामेनापि जिनदासः श्रेष्ठी। तद्गृहे देवपालनामा कर्मकरोऽतीव विनयवान् शान्तो विवेकवान् गुणज्ञः स्वामिभक्तो गाश्चारयति। अथान्यदा वर्षाकालः समायातः।

गज्जंति घणा णच्चंति सिहिगणा[4] लवइं विज्जुला गयणे।
कुलंकसायकलुसं वहंति वरसंति वारिधरा॥ २॥

तस्मिन्काले देवपालनामा कर्मकरो[5] गाश्चारयित्वा यावद्गृहमायाति तावन्मार्गे नदी जलपूरेण दुस्तरा जाता। देवपालो यावन्नदीपूरं पश्यति तावज्जलमध्ये शैलमयीं जिनप्रतिमां दृष्टवान्। चिन्तितश्च—

अहोभाग्यमहोभाग्यमहो मे पुण्यसङ्गमः।
अहो मे कर्मसामग्री कटरे कर्मलाघवम्॥ ३॥

अन्ते महान् वर्षः। तां जिनप्रतिमां गृहीत्वा तत्रैव पिप्पलतरोस्तले स्थापयामास। नियममभिजग्राह—पूजामकृत्वा कदापि नाहं भोक्ष्ये। गृहमागतः। जलदो वर्षति। देवपालोऽपि नदीपूरेण स्खलितो देवपूजामकृत्वा भोजनं न करोति। जिनदासेन भणितोऽपि

---

१. आगतः for भेजे A. २. ॰प्रभावाविर्भावः स जिन॰ for ॰प्रभावाविर्भावाय जिन॰ A. ३. This line is supplied by the Editor. ४. सिंहमयूर॰ for सिहि॰ Z. ५. कर्मकरः is missing in Z.

न पारयति। सप्तदिनप्रान्ते मेघः स्थितः। तस्य सप्तोपवासा जाताः। सप्तोपवासप्रान्ते देवपूजार्थं गतो नदीतटे।

सत्त्वाद् वर्षति पर्जन्यः सत्त्वात् सिद्ध्यन्ति देवताः।
सत्त्वेन धार्यते पृथ्वी सर्वं सत्त्वे प्रतिष्ठितम् ॥ ४ ॥

तस्य सत्त्वात्परितुष्टो देवः। सप्तमे दिने तस्मै राज्यं तस्य नगरस्य दत्तम्। सप्तमे दिने तन्नगरस्वामी विषूचिकारोगेण मृतः। परमपुत्रवान्। पुत्राभावे मन्त्रिभिर्गजः प्रतिष्ठितः। कुम्भस्थले[1] जलपूर्णकलशो मुक्तः। तदा ततस्तत्रैव सप्तमे दिने पिप्पलतरोर्मूले सुप्तस्य देवपालनाम्नः शिरसि कलशो ढालितः। राज्यं दत्तम्। दिव्यवेषं बभार। पूर्ववेषं तत्रैव तत्याज। महतोत्सवेन नगरे तस्य प्रवेशो बभूव। तन्नगरस्वामी जातः। अन्यस्मिन् दिने तेनैव व्यवहारिणा तस्य पूर्ववेषो राजप्रतोलीद्वारे बद्धः। तं दृष्ट्वा सर्वोऽपि राजवर्गस्तस्मिन् विरक्तो बभूव। देवपालराजापि सर्वं जनं विरक्तं दृष्ट्वा पुनर्गतो जिनसमीपम्। स्तुतः स्वामी। स्वामिनो व्यन्तरदेवेन तस्याग्रे कथितम्—'तव राज्यं दत्तम्। केनाप्यन्यथा न क्रियते। परं तु धवलगृहे गत्वा मृत्तिकामयं गजं निर्माय तस्मिन् गज उपविश्य श्रीवीतरागनाममन्त्रस्मरणपूर्वमक्षतैः छंटयेथाः। एवं कृते स गजः प्रत्यक्षगज इव चलिष्यति। एवं च तं महिमानं दृष्ट्वा सर्वे लोकास्त्वां[2] नमस्यन्ति।' देवपालोऽप्येवं व्यन्तरोक्तिमाकलय्य सौधं जगाम। मृन्मयो गजः कारितः। तस्मिन्नधिरुह्य जिननामोच्चारपूर्वकमक्षतैः छंटितः सजीवो बभूव। सर्वे सकौतुकं[3] राजानं दृष्ट्वा[4] प्रणमन्ति। राजा निष्कण्टकं राज्यमनुभवति। अथान्यदा राजा सपरिजनस्तस्य जिनदासनाम्नः श्रेष्ठिनो गृहं गतः। तावच्छ्रेष्ठिनापि स्वर्णस्थालं रत्नपरिपूर्णं प्राभृतीकृतम्।

उवयारउ उवयारउ सव्वू कोइ करेइ।
अवगुणकिइं[5] जुं गुण करै विरला जणणि जणेइ ॥ ५ ॥

राज्ञा सन्तुष्टेन स श्रेष्ठी सर्वमुद्राधिकारी कृतः। स्वयन्तु

---

१. ०स्थे for स्थले Z. २. ०स्तां Z. ०स्तं A. ३. Z. adds तं before राजानम्। ४. कृत्वा for दृष्ट्वा Z. and A. ५. ०किइ ज्जु for ०किइं जु Z.

निश्चिन्तो राज्यमनुशास्ति। अन्यदा नगरमध्ये महाकायः पर्वतप्रायो जिनप्रासादः कारितः। तत्र सैव जिनप्रतिमा स्थापिता। राजा सान्तःपुरोऽहर्निशं जिनालये याति। तत्रागरुकर्पूरचन्दनसुगन्धकुसुमद्रव्यैः श्रीवीतरागमपूजयत्। अन्यदा सान्तःपुरस्य राज्ञो जिनालय आगच्छतो मार्गे शिरःस्थितकाष्ठभारक एकः कबाडिकः सम्मुखो बभूव। राज्ञी तथाविधं तं कबाडिकं निरीक्ष्य मूर्च्छामवाप। पूर्वभवं[1] स्मरति। अचैतन्या पूर्वभवस्मरणादेनां गाथां पुनः पुनः पठति—

अडवि हि पत्ती नइं जलुं[2] तोइ न वूहा हत्थ।
अव्वो तह वि कबाडी यह अज्ज वि सावि अवत्थ ॥ ६ ॥

मूर्च्छा भग्ना। राज्या पृष्टम्—'देव! किमेतत्कारणं यदेतेन कबाडिकेन दृष्टेन मम पूर्वभवः स्मृतः?' पूर्वभवेऽहं पुलिन्धभूवम्। अयं तु मम भर्ताऽऽसीत्। अन्यदा तस्मिन् प्रदेशे मुनिः प्राप्तः। तेन मुनिना देवपूजार्थे नियमो ददे। मया गृहीतः, परं तु मम भर्त्रा न गृहीतः। अहं त्रिसन्ध्यं जिनपूजां करोमि। तेन पुण्यफलेनाहं तव पट्टमहादेवी जाता। अयन्तु तामेव दुःस्थामवस्थां भुङ्क्ते।' इति श्रुत्वा सर्वे देवपूजां कुर्वन्ति ॥

इति देवपूजाविषये देवपालकथानकम् ॥

## कोपः।

वर्षमेघं कुणालायां दिनानि दश पञ्च च।
मुसलप्रमाणधाराभिर्यथा रात्रौ तथा दिवा ॥ १ ॥

कुणालायां नगर्यां द्वौ ऋषी निर्धमनयो[3] कायोत्सर्गेण वर्षायां स्थितौ। मेघः सर्वत्र वर्षति। पशुपालकैः साधोर्दूषणं[4] दत्तम्—'अमू मुनी मेघं वर्षन्तं वारयतः।' मुनी कोपं गतौ। प्रथमेनोक्तम्—'वर्षमेघं कुणालायाम्'। द्वितीयः प्राह 'दिनानि दश पञ्च च'। पुनः प्रथमः प्राह—'मुसलप्रमाणधाराभिः'। पुनर्द्वितीयः प्राह—'यथा रात्रौ तथा दिवा॥' मुनिशापेन मेघः पञ्चदशदिनानि ववर्ष। नगरी प्लाविता। मुनी अपि मृत्वा नरकं गतौ। अतः कोपो न कर्तव्यः।

---

१. भवं is missing in Z. २. नैजलु for नइं जलु Z. ३. निर्धमनयोः for निर्धमनया Z. ४. इत्वणं for दूषणं Z.

उत्तङ्गगिरौ संवरमुनिः कायोत्सर्गेण स्थितः। शासनदेवी तुष्टा। 'महात्मन्! यदा[1] (भवान्) कष्टमुपैति तदाऽहं स्मर्तव्या। अन्यदा पारणकाय ग्रामं प्रति चचाल। मार्गे सम्मुखं शकटमुपैति, परं मुनिर्मार्गं न मुञ्चति। शाकटिकेन बहुधोक्तोऽपि यदा मार्गं न त्यजति तदा सकोपः शाकटिकः शकटादुत्तीर्य पिराणकेन मुनिं ताडयति। मुनिः सकोपस्तं दण्डेन ताडयति। मिथो युद्धं जातम्।

मानं बाहुबलिर्मरीचिरचयत् श्रीस्थूलभद्रः प्रभुः
साधुः सिंहगुहास्थितो मतिमदः श्रीसिद्धसेनः कविः।
चाणक्यः किल कौणिकः क्षितिपतिर्दुर्योधनो रावणः
सूरिः सागरचन्द्र इत्यभिमतश्चक्री चतुर्थोऽपि च[2]॥ २॥[3]

## वञ्चनाविषयेऽशोकदत्तकथानकम्।

दक्षिणमथुरायामशोकदत्तनामा श्रेष्ठी वसति कोटीश्वरः। उत्तरमथुरायाः समृद्धदत्तनामा श्रेष्ठी[4] पञ्चशत[5]शकटैः समं वाणिज्याय चलितः। दक्षिणमथुरायामशोकदत्तेन सह मित्रत्वं जातम्। महान् स्नेहः। समृद्धिदत्तः स्वनगरं ययौ। अन्यदाऽशोकदत्तगृहे पुत्रोत्पत्तिर्बभूव। श्रीपतिरिति तन्नाम कृतम्। मित्रस्य वर्धापनं कथापितम्। समृद्धिगृहे पुत्र्युत्पन्ना। वर्धापनं समृद्धिदत्तेन कथापितम्। द्वाभ्यां मित्राभ्यां परस्परमिति प्रतिपन्नम्-अनयोर्विवाहोत्सवः कर्तव्य इति। वर-

---

१. Z. adds यः before यदा. २. वा for च Z. ३. After this verse A and Z read the following lines which are out of place here:—

'तथा हि—धम्मो मएण हुंतो॰ विनीतायां नगर्यां श्रीऋषभदेवप्रिया सुमङ्गला सुनन्दा।

देवीसुमंगलाए भरहो बंभीयमिहुणयं जायम्।
देवीसुनंदाए बाहुबली सुन्दरी चेव॥

श्रीऋषभदेवे व्रतमापन्ने श्रीभरतेश्वरस्य राज्ये दत्तेऽष्टनवतिपुत्राणां विभज्य राज्ये दत्ते स्वामी केवलज्ञानमवाप॥

४. उत्तरमथुरायाः समृद्धदत्तनामा श्रेष्ठी is missing in Z. ५. शत is missing in A.

एकं जातम् । लग्नं गणितम् । अन्यदाऽकस्माद्शोकदस्तस्य घोरज्वरोदयोऽभूत् । श्रेष्ठी मृतः । श्रीपतिः पदे स्थापितो गृहभारं निर्वाहयति । अन्यदा श्रीपतिः स्नानार्थमुपविष्टः । तदा स्वर्णकुण्डी उत्पमिता । स्नाने कृते स्नानपट्टोऽपि गतः । देवतावसरं वन्दनाय यावद् याति तावद् देवतावसरोऽगमत् । इतश्च प्रवहणानां त्रुडितानां वार्ता समायाता । भोजनायोपविष्टस्य स्थालिर्गता । स्वर्णमयकचोलं ३२, सिप्राः ३२, गतानि । स्थालिः थरथरति । स्थालं व्रजमानं हस्तेन साहितं खण्डं मुक्त्वा गतम् । अन्यदा एक ऋण[1]पुरुषः समागतः प्राह—'द्रव्यलक्ष एको मया लभ्यः, देहि ।' यावन्निधानानि विलोकयति तावद् द्रव्याणि रजोमयान्यभूवन् । विषादापन्नो मातरं मुत्कलाप्य देशान्तरं प्रतस्थे । स्थालखण्डं सदैव गृहीतम् । पर्वते चटित्वा कालं कुर्वन् कामाश्रावणीं कुरुते । इतश्च गुहामध्ये मुनिः कायोत्सर्गेण स्थितोऽस्ति । तेन ज्ञानेनालोक्यो[2]क्तम्—'भोः श्रीपते ! साहसं मा कुरु, ईदृशेन मरणेन व्यन्तरत्वं प्राप्यते, कुमृत्युं मा कुरु, यतः—

> रज्जुग्गहणे विसभक्खणे[3]ण जलणेय जलपवेसेय ।
> तिण्हाबुहा किलंतो[4] मरिऊणं हुंति वितरीया ॥ १ ॥

अतो मा कुरु मृत्युम् ।' श्रीपतिरागत्य मुनिं प्रणमति । मुनिः प्राह—'किमर्थं म्रियसे ?' श्रीपतिः प्राह—'द्रव्यदाहो मे बाधते मुने !' मुनिः प्राह—'भो श्रीपते ! असारं द्रव्यं मलिनं वैरकारणम् अनर्थमूलम् । अत्र दृष्टान्तः—

पूर्वमत्रैव भरतक्षेत्रे कोशवर्धनं नाम नगरम् । तत्र भीमो ब्राह्मणः । तस्य द्वौ पुत्रौ देवधर्म[5]-देवशर्मनामानौ । दारिद्र्योपहतौ द्रव्योपार्जनार्थं द्वावपि बान्धवौ देशान्तराय चलितौ, देशाद्देशं ग्रामाद् ग्रामं पुरात्पुरं भ्रमन्तौ जयपुरे[6] गतौ । जयारिकेसरी नामा राजा । तस्य पुत्री मदनावली । तया राजपुत्र्या सौभाग्यसन्दीपनं नाम तपस्तप्तम् । तस्य तपस उद्यापनं कुर्वाणाऽऽस्ते । तया पुरमध्ये पटहो

१. Z. adds लहणायत after ऋण. २. आलोक for आलोक्य Z. ३. विसभक्खेणे for विसभक्खणे॰ Z. ४. किलंति for किलंता A. ५. A omits देवधर्म. ६. जयपुरनगरे for जयपुरे Z.

दापितः[1]। द्वौ अपूर्वब्राह्मणौ यौवनावस्थावाकारणीयौ[2]। रूपसम्पन्नौ वैष्ठिकौ च तौ द्वावप्याकारितौ। सुवर्णमयभाजनं द्रव्यसुवर्णरत्नैर्भृत्वोपरि मण्डकमोदकशर्कराभिः सम्पूर्य ब्राह्मणाभ्यां दत्तम्। द्वौ बान्धवौ द्वे स्थाले[3] आदाय नद्यां गत्वा भोजनं चक्राते। ताभ्यां मिथ आलोच्य द्रव्यं तत्रैव निखातीकृतम्। द्रव्योपार्जनार्थं देशान्तरे चलितौ। तयोमार्गे गच्छतोर्वृद्धभ्रातुश्चित्तं चलितम्। कौशाम्बीपुरीप्रत्यासन्नाटव्यां वृद्धभ्रात्रा लघुबान्धवो जलावलोकनायान्धकूपे मुत्कलितः—'हे भ्रातः! जलं विलोक्यागच्छ। अहमतीव तृषातुरोऽस्मि।' लघुबन्धुः कूपे यावज्जलं विलोकयति तावद्देवशर्मनाम्ना वृद्धबान्धवेन कूपे निक्षिप्तः। तेन पतताप्यञ्चले साहितः। द्वावपि कूपे पतित्वा मृतौ। मृत्वा सर्पौ जातौ। तृतीयभवे मूषकौ जातौ। चतुर्थभवे हरिणौ व्याधेन मारितौ। पञ्चमभवे कौशाम्बीनगर्यां माधवब्राह्मणगृहे वासन्ती प्रिया, तस्याः कुक्षौ पुत्रौ उत्पन्नौ रुद्रमहेश्वरनामानौ। अन्यदा क्षेत्रे द्वावपि दोहनार्थं गतौ। तस्य निखातस्योपरि कलहं कुरुतः। प्रत्यासन्नकौटुम्बिकैर्वारितौ गृहमागतौ। गृहे स्नेहः, क्षेत्रे वैरम्। अन्यदा केवली पृष्टः। केवलिना पूर्वभववृत्तान्तः कथितः। तौ द्वावपि बान्धवौ प्रबुद्धौ। व्रतं जगृहतुः। मृत्वा देवलोकं गतौ। तपोधनः कथयति—'हे श्रीपते! अमुष्यासारस्य द्रव्यस्यार्थे कः कुमृत्युं विधाय मानुषं जन्म निष्फलं विदधाति' इति श्रुत्वा श्रीपतेः प्रबोधो बभूव। गीतार्थत्वादेकाकी विचरति। कियत्कालानन्तरं तपःप्रभावात्तस्यावधिज्ञानमुत्पन्नम्। विहारं कुर्वन् कियद्भिर्दिनैरुत्तरमथुरायां समृद्धिदत्तगृहे वितरणायागतः। स्नानकुण्डिका[4],लोटका, देवतावसरसमुदायः, स्थालः कचोलाः ३२, सिप्राः ३२, सर्वं स्वकीयं दृष्टमुपलक्षितम्। खण्डस्थाली श्रेष्ठी भोजनं कुरुते। मुनिर्दिशोदिशि निजकीयामृद्धिं विलोकयति। श्रेष्ठी ऊचिवान्—'मुने! दिशोदिशि किं निरीक्षसे?' तपोधन आह—भोः श्रेष्ठिन्! एतानि स्नानस्थानानि स्थालकचोलादीनि च भवद्भिः कारितानि किं वा भवत्पूर्वजकारितानि? श्रेष्ठी जगाद—'महात्मन्! अग्रेतनान्यमूनि।' मुनिराह—'कोचरे स्थालकेवले कथं भुज्यते?' श्रेष्ठि-

१. दावापितः for दापितः Z. २. आकरणीयौ for आकारणीयौ A.
३. स्थालौ for स्थाले Z. ४. ०कुण्डीका for ०कुण्डिका A.

नोक्तम्—'स्थाले खण्डं न तिष्ठति।' श्रीपतिः कटीप्रदेशात् स्थालखण्ड माकृष्य स्थालसम्मुखं यावद्विदधाति तावत् स्थालखण्डं स्थाले संलग्नम्। स्थालमखण्डमभूत्। तपोधनश्चलितः। समृद्धदत्तो मुनिमभिवन्द्य पृष्टवान्। मुनिराह—'यत्त्वमलीकं प्रभाषसे तदहं कथं कथयामि।' समृद्धदत्तः प्राह—'अहं वरांसितः (?)। अलीकमुक्तम्। अस्याश्चर्द्धेर्मम गृहे अष्टौ वर्षाण्यभूवन्।' मुनिराह—'सर्वं मदीयमिदम्। अशोकदत्तस्य सुतोऽहं श्रीपतिर्नाम।' समृद्धदत्तो हर्षितः। 'मया तुभ्यं पुत्री प्रदत्तास्ति। पाणिग्रहणं कुरु। द्रव्यं सुवर्णमहं पूरयिष्यामि।' मुनिराह—'हे श्रेष्ठिन्! इदं सर्वं त्वदीयम्। त्यक्तं मया संसारसुखम्। हे श्रेष्ठिन्! पूर्वभवं शृणु।' उपविष्टो मुनिः पूर्वभवमाख्याति—"श्रीपुरे नगरे जिनदत्तः श्रेष्ठी वसति। तस्य द्वौ पुत्रौ पद्माकरगुणाकरौ। अन्यदा मृत्युवेलायां क्षेत्रे निखातं कथितम्। अन्यदा द्वाभ्यां कथितम्—'प्रस्तावे गृहीष्यावो निखातम्।' अन्यदा वृद्धभ्रात्रा पद्माकरेण मध्यरात्रौ गत्वा क्षेत्रे प्रच्छन्नं तन्निखातं गृहीतम्। अन्यदा द्वावपि मिलित्वा क्षेत्रे द्रव्यखननार्थं गतौ। द्रव्यं खनितं परं नष्टम्। पद्माकरस्य कपटेन मूर्च्छा समागता। कथितम्—'हे गुणाकर! (द्रव्यं) त्वया गृहीतम्। लघुभ्राता दिव्यं कारितः। कालेन कियता मृत्वा आजन्मवञ्चकत्वगुणेन पद्माकरजीवेनाहं गुणाकरजीवेन त्वमुत्पन्नः। अस्मिन् भवे पूर्वभववञ्चनाप्रभावेन मम द्रव्यं तव गृहे समागतम्।' अतो वञ्चना कस्यापि न कार्या। श्रेष्ठी प्रतिबुद्धो व्रतं जग्राह॥

इति वञ्चनाविषयेऽशोकदत्तकथानकम्॥

## लोभविषये कथानकम्

सर्वलोकरचितं जगत्त्रये लोकनाटकमपूर्वमीक्ष्यताम्।
यत्र नाम कमलाहृदीश्वरः सोऽपि वामनविडम्बनां श्रितः॥
लोभमूलानि पापानि रसमूलाश्च व्याधयः।
स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भव॥

---

१. The form is ambiguous. २. ०र्चाद्धिर्मम for ०श्चर्द्धेर्मम A. ३. ०सुषम् for सुखम् Z. ४. ०रहितं for ०रचितं A and Z. ५. 'कम' is missing in A. ६. श्रितं for श्रितः A.

अत्र दृष्टान्तमाह—

जहा लाहो तहा लोहो लाहालोहो पवड्ढए ।
दोमासकयं कम्मं कोडीए न निवड्ढए ॥ ३ ॥

अत्रैव भरते कुशस्थलग्रामे[1] वासुदेवनामा[2] ब्राह्मणः परिवसति। तस्य बाल्यत्वे पिता मृतः। अन्यदा मातरं मुत्कलाप्य विद्यापठनाय चम्पापुरीं ययौ। तत्र क्षीरकदम्बोपाध्यायसमीपे पठति। जनमध्ये विद्यार्थी प्रसिद्धो राजकुले भिक्षां लभते। अतिपरिचयादन्यदा राजकीयदास्या समं सम्बन्धोऽभवत्। कियद्भिर्दिनैः सा दासी सगर्भा बभूव। तया कथितम्—'हे विप्र! प्रसवकाले कथं मे सूतिकाकर्म भविष्यति? अर्थं विना किञ्चिदपि प्रयोजनं सिद्धिं न याति ततो द्रव्योपार्जनोपायं विचिन्तय।' तेनोक्तम्—'किमुपायं चिन्तयामि?' दास्योक्तम्—'श्रीपुरे नगरे श्रीवर्धनो नाम राजा। स राजाऽपूर्वागतब्राह्मणस्य प्रभाते सुवर्णमाषयुगलं ददाति। सुवर्णमाषयुगलेन मम प्रसूतिरोगो निर्वहिष्यति' इति श्रुत्वा श्रीपुरे[3] गतो विप्रः। रात्रौ देशीयकुट्यां सुप्तः। लोभाज्ज्ञानविकलो मध्यरात्रमपि प्रभातं जानन् माषद्वययाचनायार्धरात्रे[4] उत्थितः। 'अद्याहं मन्दो यास्यामि तदान्यः कोऽपि याचयित्वा यास्यति ततोऽहं सकाले[5]ऽपि यामी'ति चिन्तयन् अर्धमार्गे यावद् याति तावत्तलारकैश्चौरशङ्कया बद्धः। प्रातर्गृहीतो राजसभायां राज्ञा शान्तचेतसं तं दृष्ट्वा बन्धनाच्छोटितः। पृष्टं च—'कस्त्वम्? किमर्थमर्धरात्रौ चलितः?' तेनामूलचूलादपि दासीवृत्तान्तो माषद्वयकारणमप्युक्तम्। राजा प्राह—'तर्हि याचस्व निजेच्छया। तुष्टोऽस्मि ते।' तेनोक्तम्—'आलोच्य याचयिष्यामि।' राज्ञोक्तम्—'आलोचय'। विप्रोऽप्येकान्त उच्चप्रदेश उपविश्य यावदालोचयति तावच्छतेन सहस्रेण[6] लक्षेण कोट्यापि माषाणां तृष्णा नोपशाम्यति। तावन्मुनिरेको बद्धपद्मासनो गाथां पठन् दृष्टः[7]।

---

१. कुच॰ for कुश॰ Z. २. नामा is missing in A. ३. Z. adds नगरे after श्रीपुरे. ४. Z. adds ऽपि after ॰रात्रे. ५. A. reads सकलो॰ for सकाले॰. ६. Z. adds ऊन before सहस्रेण. ७. A omits दृष्टः after पठन्.

सव्वं गीयं विलवियं सवा नट्टविडंवणा ।
सव्वे आभरणा भारा सव्वे कामा दुहावहा ॥ ४ ॥[1]

विप्र इमां गाथां श्रुत्वा वैराग्यपूर्णश्चिन्तयति—जहा लाहो० इति । विमृश्य केशानुन्मूल्य व्रतमाददे । राज्ञे धर्मलाभाशीर्वादं दत्वा गाथार्थं व्याख्याय वने जगाम स्वयम्बुद्धो मुनिः, इति सर्वथा लोभः परिहर्तव्यः ।

इति लोभविषये कथानकम् ॥

## यशोभद्रकथानकम् ।

इहैव भरते साकेतपुरं नाम नगरम् । तत्र पुण्डरीको राजा । तस्य लघुभ्राता कण्डरीकः । कण्डरीकभार्या यशोभद्रा नाम्नी । अन्यदा वृद्धभ्रातुः पुण्डरीकस्य चित्ते कामबाणैराहतस्य लघुभ्रातुः कण्डरीकस्य भार्यायामनुरागो[2] बभूव । एकदा एकान्ते वधूं प्रत्युवाच—'कान्ते ! मां पतिं भजस्व' । तयोक्तम्—'राजन् ! किमेवमभिदधासि ?

अहाय वह्नौ बहवो विशन्ति शस्त्रैः स्वदेहानि विदारयन्ति ।
तीव्राणि कृच्छ्राणि समाचरन्ति माराविवीरं विरला जयन्ति ॥ १ ॥'

राज्ञी वदति—'हे राजन् ! अमृते विषमुत्पन्नम्, सूर्यादन्धकारः, चन्द्रमसोऽङ्गारवृष्टिः । यतो रक्षा[3] ततो भयम् । जलादग्निरुत्थितः । यदि सुनेत्रो नर उन्मार्गं गच्छति[4] तद् दृष्टिविकलस्य को दोषः[5] ?

हीया हीया बीहा थु नारि पिराई वाहीयँ[6] ।
रुलीउँ[7] रावणु साथु इक्कह सीयाह कारणिणं[8] ॥ २ ॥'

राज्ञा दुर्वचनतर्जिता वधूः । अन्यदा कोपातुरेण राज्ञा तस्याः सङ्गं चिन्तयता लघुभ्रातुः कण्डरीकस्य मारणाय विषं दत्तम् । यतः—

दिवा पश्यति नो घूको रात्रौ काको न पश्यति ।
कामान्धः कोऽपि पापीयान् दिवारात्रौ न पश्यति ॥ ३ ॥

---

१. For this verse A reads सव्वं विलंवियं गीयं इत्यादि । २. A and Z. read भार्या for भार्यायाम्. ३. A and Z. read राक्षसः for रक्षा. ४. याति for गच्छति Z. ५. A reads गाथा after दोषः. ६. वाहीइ for वाहीय Z. ७. Z. adds अउ after रुलीउ. ८. कारणिइण for कारणिणं Z.

कण्डरीके भर्तरि मृते सति राज्ञी चिन्तयति—'अयं पापी मह्यं शीलविनाशकलङ्कं दास्यति। ततोऽहं कचिद्गत्वा शीलं रक्षामी'ति मनसि विमृश्य रात्रौ निर्गत्य श्रावस्तीनगर्यां गता। तत्र तपोधना सुव्रता तस्याः पौषधागारे गता, तन्मुखाद्धर्मोपदेशं निशम्य संसारोपरि विरक्ता बभूव। उत्पन्ने वैराग्ये सा राज्ञी दीक्षां जग्राह। पूर्वसम्भवो गर्भोऽस्तीति व्रतान्तरायत्वान्महासत्यो[1] अग्रे न निवेदितम्। स्वपति-सम्भवो गर्भो वृद्धिमाप। तया सुव्रतया महासत्योक्तम्—'वत्स! किमेतत्'? राज्ञी प्राह—'भगवति! दीक्षाकाङ्क्षया मया न कथितम्।' सुगुप्तगीतार्थश्रावकगृहे मुक्ता। तत्र प्रसवो बभूव। पुत्रो जातः। तस्य पुत्रस्य यशोभद्र इति नाम परिकल्पितम्। अष्टवार्षिके जाते गुरुभिर्दीक्षितोऽध्यापितः। यौवनकाल उन्मत्तो विषयाभिलाषी मत्तहस्तीव विन्ध्यं स्मरन् अचेतन इवातिष्ठत्। रोगी, अन्नद्वेषी, व्रतद्वेषी चित्तं विना व्रतं पालयति। यतः—

हरिहरबंभपुरंदरसुरनरनिवहा वि विज्जिया जेण।
सो मयणो[2] लद्धरसो जेण जिउतं जिणं णमह ॥ ४ ॥
सव्वगहाणं पभवो महागहो सव्वदोसपायट्ठिई।
कामगहो दुरप्पा जेण भिभूयं जगं सव्वं ॥ ५ ॥

इतश्च कस्मिंश्चिदवसरे[3] मातुरग्रे निवेदितम्—'मातः! न शक्नोम्यहं व्रतं पालयितुम्। यास्यामि निजे राज्ये। भजिष्यामि गार्हस्थ्यम्। भुक्तभोगो वृद्धत्वे व्रतं गृहीष्ये। अधुना निजपितृव्यस्य पुण्डरीकस्य पार्श्वे राज्यं करिष्यामि।' माता प्राह—'वत्स! तर्हि मम प्रार्थितं कुरु—

अशक्तोऽपि व्रतं कर्तुं मम प्रार्थनयाऽनया।
तिष्ठ द्वादशवर्षाणि पश्चात्कुर्या यथोचितम् ॥ ६ ॥'

प्रतिपन्नं तेन तन्मातुर्वचनम्, द्वादशवर्षान्ते गुरुण्या वर्षाणि द्वादश स्थापितः। उपाध्यायेन वर्षाणि द्वादश स्थापितः। गुरुवाक्येन वर्षाणि द्वादश। एवमष्टचत्वारिंशद्वर्षप्रान्ते गुरून् मुत्कलापयति। माता व्रजतः पुत्रस्य रत्नकम्बलं ददौ। स्वपितृव्यपुण्डरीकपार्श्वे

---

१. A. and Z. read महासती for महासत्या. २. मयाणा for मयणो Z. ३. कस्मिन्नवसरे for कस्मिंश्चिदवसरे A. and Z.

गच्छति। रजन्यां साकेतपुरे गतः। प्रातर्भूपालं भेटयिष्यामीति रात्रौ देवकुले प्रेक्षणविलोकनाय स्वच्छन्दमुपविष्टः। तत्र बहवो भूपालप्रभृतयो लोकाः प्रेक्षणकं विलोकयन्तस्तिष्ठन्ति। महारसे प्रेक्षणकं भवति। रात्रीप्रहरत्रये व्यतीते नर्तकी खिन्ना। मात्रोक्तम्—'वत्से! स्तोकव्यतिकरे कथमङ्गं मोटयसि?

सुष्ठु गीतं त्वया सुष्ठु नर्तितं सुष्ठु विन्दितम्।
दीर्घरात्रमतिक्रम्य मा प्रमादीर्निशात्यये॥ ७॥'

इमां गाथां श्रुत्वा तपोधनो वैराग्यभाक् रत्नकम्बलं ददौ नर्तक्याः। राजकुमारेण सुवर्णकुण्डलं रत्नजटितं ददे। श्रीकान्ता नाम तत्रैव वास्तव्या स्त्री मौक्तिकहारं ददौ। हस्तिपकोऽङ्कुशं ददौ। जयसन्धिनामा मन्त्रीश्वरो नर्तक्याः सुवर्णकटकौ ददौ। पञ्चापि लक्षमूल्यानि। राज्ञो मनसि विस्मयो बभूव। राज्ञाऽनुचितदानहेतुं मुनिः पृष्टः। तपोधनः प्राह—

'यत्नाश्रीतं मनः स्थाने गुरुणा नापि तत्तया।
सूर्याभेद्यं भिनत्त्येवं[1] दीपिका भूगृहे तमः॥ ८॥

राजन्! एषा स्त्री मम गुरुणी सुगतिं ददाति, अतः कारणाद् रत्नकम्बलं दत्तम्।' राज्ञा श्रीकान्ता पृष्टा। सापि वक्ति—'राजन्! मम मनसि इति चिन्ताऽभूत् यत् स्वभर्तारं विनाश्य अन्यं पतिं करिष्यामि, ममाप्यस्या वाक्यात्प्रतिबोधः। राज्ञा हस्तिपको दानकारणं पृष्टः। 'राजन्! अहमन्यद् राज्यं गन्तुकामो गजेन्द्रं प्रेरयित्वा रणाङ्गणे त्वां वैरिणां मध्ये नेष्यामि।' ममेति चिन्ताऽभूत्। 'अमात्यस्य राजकुमारस्य चैको मन्त्रः। राजानं विनाश्य राज्यं गृहीतुकामौ अस्या वाक्येन प्रतिबुद्धौ।' आवश्यकसिद्धान्त उक्तम्—

सुट्ठु गाईयं सुट्ठु वाईयं सुट्ठु नच्चियं सामसुंदरि[2]।
अणुपालिय दीहराइंओ[3] सुमिणं ते मा पमायए॥ ९॥

राजा सर्वेषामाशयान् निशम्य सहर्षो बभूव। संसारासारतां विज्ञाय[4] राजा विशेषतः, तपोधनादेशनया सर्वेऽपि प्रतिबुद्धाः। राजा

---

१. भिन्नं त्वेव for भिनत्त्येव A. २. मामसुंदर for सामसुन्दरि Z. ३. दीहराइंच for दीहराइंओ Z. ४. A and Z. add प्रतिष्ठां द्वौ after विज्ञाय.

कुमारं राज्ये विनिवेश्य मुनिपार्श्वे व्रतं गृहीत्वा निरतीचारं चारित्रं पालयित्वा दिवमगमत्। यशोभद्रो मुनिरपि गुरुपार्श्वे गतः। स्वदुष्कृतमालोच्य प्रतिक्रम्य पुनश्चारित्रं पालयित्वा केवलज्ञानी बभूव। प्रान्ते समाधिमृत्युं विधाय शिवं जगाम। अतः[1] कारणात्—

प्रस्तावे भणितं वाक्यं प्रस्तावे दानमङ्गिनाम्।
प्रस्तावे वृष्टिरल्पापि भवेत्कोटिफलप्रदा ॥ १० ॥

इति प्रस्तावोक्तिविषये यशोभद्रकथानकम् ॥

## महासतीमदनरेखाकथानकम्।

शीलं प्रधानं न कुलं प्रधानं कुलेन किं शीलविवर्जितेन।
एके न राज्ञी च कुलप्रसूताः स्वर्गं गताः शीलमुपैति धीरः ॥ १ ॥

सीतया दुरपवादभीतया पावके स्वतनुराहुतिः कृता।
पावकोऽपि जलतां जगाम यत् तत्र शीलमहिमा विजृम्भते ॥ २ ॥

वह्निर्वारि जलं स्थलं कमलिनीनालं भुजङ्गेश्वरः
पीयूषं गरलः खलश्च सरलः कण्ठीरवः फेरवः।
किं वान्यद् विषमं समं तनुमतां यस्योर्जितैः स्फूर्जितैः
तं शीलाद्भुतवेधसं स्फुरदुरुश्रीतेजसं सुस्तुमः ॥ ३ ॥

निजपतिमृतियोगे ज्येष्ठनिर्दिष्टभोगे खचरजनित[2]रङ्गे सम्भवन्मानभङ्गे।
जगति जनितरेखा रूपलावण्यरेखा जयति मदनरेखा मानिनी दिव्यवेषा ॥

इहैव जम्बूद्वीपे भरतक्षेत्रे अङ्ग[3]देशे सुदर्शनपुरं नाम नगरम्। तत्र मणिरथो नाम राजा राज्यं करोति। युगबाहुनामा तस्य लघुभ्राता। युगबाहुपत्नी मदनरेखा अत्यन्तरूपपात्रम् परं। सा जिनधर्मरता सुशीला सुलक्षणा सौभाग्यवती। अन्यदा मणिरथेन राज्ञा ज्येष्ठेन मदनरेखारूपमोहितमानसेन इति चिन्तितं यदेषा स्त्री सुखेन दुःखेन वा कृत्याकृत्येन मया गृहीतव्या। अतः कारणादयं मणिरथो राजाऽस्या आवर्जनार्थं पुष्पताम्बूलादि वस्त्रालङ्करणादिकं वात्सल्यादर्पयति। सा मदनरेखापि निर्विकारा सती सर्वं गृह्णाति। अन्यदा राज्ञा दूती प्रहिता। सापि गत्वा मदनरेखामेवं वदति—'भद्रे! असौ राजा तव गुणानुरक्तो मन्मुखात् त्वामिदं वदति'—

---

१. अकृतं या for अतः A. and Z. २. ०जन० for ०जनि० A. ३. अवंती for अङ्ग Z.

मां भर्तारं प्रतिपद्य राज्यस्य स्वामिनी भव ।
जाताकूता ततो राज्ञी जगादैवं सतां मनः ॥ ५ ॥
अन्यास्वप्यभिलाषेण व्रजन्ति नरकं नराः ।
तद् राजन् ! कुरु सन्तोषं मुञ्च भोगकदाग्रहम् ।
दूती तस्येतिवाक्यानि राज्ञे तूर्णं[1] न्यवेदयत् ॥ ६ ॥

राज्ञा चिन्तितम्—'यावद्युगबाहुर्जीवति तावदेषा मम प्रिया न भवति ; तथा करिष्ये यथा भ्रातरमपि विनाश्यैनां प्रियामानयिष्ये ।' अन्यदा मदनरेखया चन्द्रमाः स्वप्ने दृष्टः। प्रभाते पत्युरग्रे[2] निवेदितम्। सोऽप्युवाच—'देवि ! तव चन्द्रसमानः सौम्याकारः प्रसन्नवदनः पुत्रो भविष्यति ।' अथ तृतीये मासे मदनरेखाया गर्भप्रभावेन देवपूजार्थं दानं दातुं दोहदो बभूव । राज्ञा युगबाहुना स दोहदः पूरितो वसन्तसमये । अन्यदा राजा युगबाहुर्मदनरेखया सह क्रीडार्थं गतः । नागरिकजनवर्ग्वैरीविलोकयन् युगबाहुः कदलीगृहं प्रविवेश । अथ रात्रौ पतितायां मणिरथो राजा दध्यौ । अधुना मदीयोऽवसरो यद् युगबाहुः स्वल्पपरिवारेण वने निशायां सुष्वाप । ततो मणिरथो राजा खड्गं करे कृत्वा युगबाहुप्राहरिकान् पप्रच्छ—'भोः प्राहरिकाः ! कुत्रास्ते मम भ्राता युगबाहुः ?' तैरुक्तम्—'स्वामिन् ! कदलीगृहे शेते' । 'अत्र वने कोऽपि शत्रुर्मम भ्रातरं परिभविष्यतीति कारणाद् असन्तोषेणाहमत्रागत' इति ब्रुवाणो राजा कदलीगृहे विवेश । युगबाहुरपि ज्येष्ठभ्रातरं राजानमागतमाकलय्य ससम्भ्रममुत्तस्थौ । राज्ञोक्तम्—'वत्स ! एहि पुरीं[3] यामः, अत्र वासो नोचितः ।' ततः कृतप्रणामो युगबाहुः प्रस्थातुमारेभे । 'ज्येष्ठभ्राता मम विशेषतः प्रभुः । अनुलङ्घ्या अमी' इत्यचिन्तयत् । ततः पापधिया राज्ञाऽपयशोभयमवगणय्य युगबाहुभ्राता स्कन्धेऽसिना हतः। अहो! अत्तत्रमिदं[4] मदनरेखायाः कूजितम्[5]। युगबाहुं खड्गप्रहारेण हतं ज्ञात्वा धाविताः समीपवर्तिनो भटाः किमेतदिति जल्पन्तो राज्ञा मणिरथेनोक्ताः—'मत्प्रमादेन मम करात् खड्गो निपपात ।' ततो भटैश्चरितं ज्ञात्वा बलादपि मणिरथो

१. राजास्तूर्णं न्यवेदयति for राज्ञे तूर्णं न्यवेदयत् Z. राजा स्तूर्णं निवेदयेत् A. २. पतिरग्रे for पत्युरग्रे A. and Z. ३. परं for पुरीं A. and Z. ४. अत्तत• for अत्तत्र• Z. ५. कूलितम् for कूजितम् A.

राज्ञा गृहे नीतः। युगबाहुपुत्रस्य चन्द्रयशसस्तत्स्वरूपं निवेदितम्। सोऽपि हाहारवं कुर्वन् वैद्यानादाय उद्याने जग्मिवान्, आत्मीयपितुर्व्रणकर्मादिकमकारयत्।

क्षणेनास्य स्थिता वाणी नेत्रयुग्मं निमीलितम्।
अङ्गं बभूव निश्चेष्टं पाण्डुरं रक्तनिर्गमात्॥ ७॥
ज्ञात्वा मदनरेखा स्वभर्तुः प्राणान्तिकां दशाम्।
तस्य कर्णान्तिके गत्वा जगादेति मृदुस्वरम्॥ ८॥

मदनरेखा तु धाष्टर्यमालम्ब्य भर्तुरन्त्याराधनं कारयामास—'अहो महानुभाव! त्वमधुना सावधानो भव। इयं धीरवेला। खेदं मा कार्षीः। कर्मपरिणामो बलवान्। येन यत् पुरा कर्म[1] विहितं तस्य तत्कर्म समायाति, परो निमित्तमात्रम्। पुण्यपाथेयं गृहाण। दुष्कृतं सर्वमपि निन्द। मित्रममित्रं स्वजनं परजनं क्षमयस्व।

तिर्यक्त्वे सति तिर्यञ्चो नारकत्वे च नारकाः।
अमरा अमरत्वे च मनुष्यत्वे च मानुषाः॥ ९॥

ये त्वया दुःखे स्थापितास्तान् क्षमयस्व।

जीवितं यौवनं लक्ष्मी रूपं प्रियसमागमः।
बलं सर्वमिदं वात्या नर्तिताब्धितरङ्गवत्॥ १०॥
व्याधिजन्मजरामृत्युग्रस्तानां प्राणिनामिह।
विना जिनोदितं धर्मं शरणं कोऽपि नापरः॥ ११॥
अन्यद्विपुवर्धं तावदन्यद् धान्यधनादिकम्।
बन्धवोऽन्येऽन्यश्च जीवो वृथा मुह्यति बालिशः॥ १२॥
वसारुधिरमांसास्थियकृद्विट्मूत्रपूरिते।
वपुष्यशुचिनिलये मूर्च्छां कुर्वीत कः सुधीः॥ १३॥

अर्हन्ताद्यान् शरणं प्रपद्यस्व। नमस्कारं स्मर। अष्टादशपापस्थानानि व्युत्सृज। जिनधर्मं स्मर। श्रीयुगादिप्रमुखान् जिनान् चिन्तय।' इत्थमाराधनां षोढां विधाय दयितं निजं मत्सरं[2] त्याजितवती।

ततः क्रन्दितुमारेभे दुःखी चन्द्रयशा भृशम्।
दध्यौ मदनरेखापि मन्दभाग्या हतास्मि हा॥ १४॥

---

१. कर्म is missing in A. २. मत्सरत्यार्जिता for मत्सरं त्याजित॰ A. and Z.

'धिङ् मे रूपं यन्मयात्र दृष्टया गुरूणामपि विकारं याति मानसम्। यन्निमित्तं हतो येन निजभ्रातापि

गृहीष्यते च मां तस्मान्मम स्थातुं न युज्यते।
तद्गत्वा क्वचिदन्यत्र पारत्र्यं कार्यमाश्रये ॥ १५ ॥
अन्यथा पुत्रमप्येष मम पापो हनिष्यति।'
मन्त्रयित्वेति सा पुत्रे शोकार्ते निरगात्ततः ॥ १६ ॥

निशीथे दिशि पूर्वस्यां गच्छन्त्या महाटवीं गता रात्रिः।

एकाकिनी द्वितीयेऽह्नि प्राप चास्तं दिनेश्वरः।
चक्रे वनफलैस्तत्र प्राणवृत्तिं जलं पपौ ॥ १७ ॥
प्रत्याख्यायाथ कासारं[1] नक्तमध्वश्रमार्दिता।
खेदच्छेदार्थमेकस्मिन् सुष्वाप कदलीगृहे ॥ १८ ॥

तत्र रजनी पतिता। नमस्कारप्रभावाद् व्याघ्रादयो जीवा दूरं गताः। अर्धरात्रे च कदलीगृहे सुषुवे पुत्रं सर्वलक्षणसम्पूर्णम्। प्रभातसमये तस्य पुत्रस्य करे युगबाहुनामाङ्कितां मुद्रां प्रक्षिप्य रत्नकम्बलेन तं पुत्रमाच्छाद्य चीवराणि प्रक्षालयितुं सरोवरे गता। तत्र यावत् स्नानं करोति तावज्जलगजेनाकाश उल्लालिता, अथ[2] नन्दीश्वरद्वीपे गच्छता विद्याधरेणाकाशात्पतन्ती मदनरेखा राज्ञी गृहीता। तेन वैताढ्यपर्वतं प्रति नीता। राज्ञी विद्याधरं प्राह—'भो महासत्त्व! रात्रौ मम पुत्र उत्पन्नोऽस्ति, तं पुत्रं कदलीगृहे मुक्त्वा स्नानं कर्तुं चीवराणि प्रक्षालयितुं यावदहं सरोवर आगता तावज्जलगजेन शुण्डाग्रेण धृत्वाऽऽकाशे उल्लालिता पतन्ती त्वया गृहीता। स बालः केनापि श्वापदेन हनिष्यते, अथवाऽऽहारं विना स्वयमेव विपत्स्यते। स बालोऽऽनीयताम्, अथवा मां तत्र नय, प्रसादं कुरु।' विद्याधरः प्राह—'यदि मां भर्तारं प्रतिपद्यसे ततोऽहं तवादेशकारी भवामि।' राज्ञी प्राह—'त्वं कः?' तेन कथितम्—'वैताढ्यपर्वते रत्नवहपुरे मणिचूडो नाम विद्याधरः। तस्य पुत्रोऽहं मणिप्रभः। पिता मां राज्ये निवेश्य व्रतमाददे। साम्प्रतं स मुनिर्नन्दीश्वरद्वीपेऽस्ति, चैत्यानि वन्दितुं गतः। तं वीक्षितुं व्रजता मया त्वं दृष्टा। अपरं स तव पुत्रस्तुरङ्गापहृतेन मिथिलापतिना पद्मरथेन वने दृष्टः। गृहीत्वा स

---

१. साकारं for कासारं A. २. अन्ध for अथ.

पुत्रः पुष्पमालायाः स्वप्रियायाः समर्पितः। तया सुतवत्प्रतिपालितः सुखं तिष्ठति। प्रज्ञप्तीविद्यामुखात्सर्वं परिज्ञातम्। त्वं मम राज्यमलङ्कुरु।' मदनरेखया तच्छ्रुत्वा चिन्तितम्—'शीलरक्षार्थं किमुपायं करोमी'ति। राज्ञ्याऽऽत्ममनसि विमृश्य कथितम्-'प्रथमं मां नन्दीश्वरयात्रां कारय, पश्चात्तव कथितं करिष्यामि।' ततो मणिप्रभविद्याधरस्तस्या वाक्येन परितुष्टस्तां नन्दीश्वरे नीत्वा शाश्वतचैत्यानि वन्दापयामास। तत्र मणिचूडमुनीश्वरं प्रणम्य मणिप्रभो मदनरेखा चोभौ तस्याग्रे उपविष्टौ। स मुनिर्ज्ञानेन मदनरेखावृत्तं ज्ञात्वा धर्मदेशनापूर्वं मणिप्रभं स्वपुत्रम् अबोधयत्। मणिप्रभो मदनरेखां प्रति प्राह—'अद्यप्रभृति त्वं मदीया भगिनी, तवाज्ञाकारी किङ्करोऽस्मि।' अत्र मणिप्रभप्रतिबोधः। ततो मदनरेखया पुत्रोदन्तं मुनिः पृष्टः। मुनिः प्राह—'पूर्वं द्वौ राजपुत्रौ अभूताम्। तौ मृत्वा देवौ बभूवतुः। तयोर्मध्यादेकश्च्युत्वा राजा पद्मरथो बभूव। द्वितीयस्तव सुतोऽभवत्। ततस्तेन पद्मरथेनाश्वापहृतेन तव पुत्र आत्मप्रियायाः पुष्पमालायाः समर्पितः पूर्वभवस्नेहात्। पद्मरथेन राज्ञा मिथिलायां महान् प्रवेशमहोत्सवः कारितः।' मुनीश्वर एवं वदति कोऽपि विमानाधिरूढो महर्धिको देवो देवाङ्गनानृत्यगीतकौतुकानन्दितचित्तः प्रवरभूषणो मदनरेखां त्रिः प्रदक्षिणीकृत्य प्रणम्य पश्चान्मुनिं नत्वा पुरो निषण्णः। तदसम्बद्धं वीक्ष्य मणिप्रभस्तमुवाच—'देवानामपि यद्येषा नीतिस्तत्कस्याग्रतो भ्रमः? चतुर्ज्ञानधरं चारुचारित्रं मुनिपुङ्गवं हित्वा त्वया स्त्रीमात्रस्य कथं पूर्वं प्रणामः कृतः?' अथ यावद्देवो वदति तावन्मुनिर्जगौ—'एवं मा ब्रूहि, अयं देवो नोपालम्भयोग्यः, यतो मणिरथो राजा भ्रातरं युगबाहुं जघान अस्यां मदनरेखायां लुब्धः। अनया मृत्युकाले कृताराधनो युगबाहुः पञ्चमकल्पे देवो बभूव। अतः कारणादस्य देवस्य मदनरेखाधर्माचार्यस्य स्थाने यो येन शुद्धधर्मे स्थाप्यते स तस्य गुरुः', इत्युक्तेऽनन्तरं विद्याधरः सुरं क्षमयामास। अथ सुरो राज्ञीं प्राह—'भद्रे। तवेष्टं किं करोमि।' राज्ञी वदति—'मम मोक्ष एव प्रियः,

---

१. The portion beginning with देशना and ending with त्वं is missing in Z. २. चारु is missing in Z.

तथापि मिथिलायां मां शीघ्रं नय । तत्र पुत्रमुखं दृष्ट्वा धर्मकर्मणि उद्यमं करिष्ये ।' युगबाहुसुरेण राज्ञी मिथिलायां नीता यत्र श्रीमल्लि-नाथस्य त्रीणि कल्याणकानि ज्ञानानि जन्मदीक्षाकेवलज्ञानादीनि। अतः कारणात्प्रथमं तीर्थबुद्ध्याऽर्हच्चैत्येषु द्वावपि गतौ । अथ तत्रैव प्रत्यासन्ने उपाश्रये साध्वीर्वीक्ष्य द्वावपि प्रणेमतुः । ताभिः साध्वी-भिस्तयोरग्रे धर्मः कथितः । देशनाप्रान्ते देवेनोक्तम्—'आगच्छ मदन-रेखे ! यथा राजकुले गत्वा पुत्रं दर्शयामि ।' मदनरेखा वदति-'भवहे-तुना स्नेहेन किं प्रयोजनम् ? एतासामेव साध्वीनां चरणौ शरणं मम' इत्युक्ते युगबाहुदेवोऽपि साध्वीः प्रणम्य दिवं गतः । मदनरेखा दीक्षां जग्राह । सुव्रता नाम जातम् । दुष्करं तपः कुरुते । अथ तस्य बालकस्य प्रभावेन राज्ञः पद्मरथस्य सर्वेऽपि राजानो नमिताः । अथ तस्य पुत्रस्य 'नमिः' इति नाम कृतम् । क्रमेण धात्रीभिर्लाल्यमानो ववृधे । अन्यदा यौवने पद्मरथेन राज्ञा नमिरष्टोत्तरसहस्रकन्यकानां पाणिग्रहणं कारितः । कियद्भिर्दिनैस्तं राज्ये निवेश्यात्मनो बलात् क्षीणकर्मा शिवं जगाम । नमितभूपालो नमी राज्यं करोति । इतश्च यस्यां रात्रौ मणिरथो राजा सोदरं युगबाहुमवधीत् तस्यामेव रात्रौ मणिरथो राजा सर्पेण दष्टः । मृत्वा चतुर्थे नरके गतः । ततश्चन्द्रयशा युगबाहु-पुत्रो मन्त्रिभी राज्ये स्थापितः । चन्द्रयशा राज्यं करोति । अन्यदा नमिराज्ञो भद्रजाती चतुर्दन्ती धवलः पट्टहस्ती स्तम्भमुन्मूल्य विन्ध्याटवीं प्रति चचाल । स हस्ती मार्गेण गच्छन् सुदर्शनपुरासन्न-लोकैर्दृष्टः । विज्ञप्तं चन्द्रयशसो राज्ञः । राज्ञा वशीकृत्यानीतः । स हस्ती आनीयालानस्तम्भे बद्धः । नमिराज्ञा तज् ज्ञात्वा सुदर्शनपुरे चन्द्रयशसो दूतः प्रहितः । दूतेन चन्द्रयशसो विज्ञप्तम् । दूतस्याग्रे राज्ञा कथितम्—

'न श्रीः कुलक्रमायाता शासने लिखितेऽपि वा ।
खड्गेनाक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा' ॥ १६ ॥

इत्युक्त्वा चन्द्रयशसा राज्ञा दूतो विसृष्टः । सोऽपि गत्वा नमि-राज्ञोऽग्रे सर्वं कथयामास । कुपितो नमिराजा सर्वबलेन सन्नह्य सुदर्शनपुरं प्राप्तः । चन्द्रयशा राजापि तस्य सम्मुखं चचाल, परं शकुनैर्वार्यमाणोऽपि चन्द्रयशा मन्त्रिवचनान्नगरप्रतोलीद्वाराणि पि-

धाय स्थितः। नमिर्नगरं वेष्टयामास। चन्द्रयशा नगरमध्ये स्थितः। इति[1] पापाकरं[2] सुव्रता विज्ञाय तयोर्द्वयोर्बोधार्थं[3] युद्धनिवारणार्थं तत्रागतो नमिः सङ्ग्रामभूमौ तपोधनां वीक्ष्याभ्युत्थानं चक्रे। राजा भूमावुपविष्टः। सुव्रता तपोधना तस्य देशनां चक्रे—'राजन्! कुतोऽयं समरसंरम्भः। असारा राज्यश्रीः। भोगा [4]निर्वाहदारुणाः। तत् त्वं सङ्ग्रामान्निवर्तस्व, सङ्ग्रामं मा कुरु। अन्यच्च निजसहोदरेण सह कः सङ्ग्रामः?' नमी राजा वदति—'मम कः सहोदरः?' सुव्रता वदति—'चन्द्रयशा राजा तव सः।' तस्य प्रत्ययार्थं मुद्रारत्नकम्बलं च दर्शयामास। तथापि सङ्ग्रामान्न निवर्तते। ततः सुव्रता चन्द्रयशसः पार्श्वे गता। तेनोपलक्षिता-'मम माता महासती च।' महाविनयेन नमस्कृता, भक्त्याऽऽसनं दत्तम्। अन्तःपुरीजनः सर्वोऽपि तां ननाम। राजा प्राह—'आर्ये! किमेतदुग्रतपः प्रारब्धम्?' सुव्रता राज्ञा इति पृष्टा निजं वृत्तान्तं कथयामास। राज्ञोक्तम्—'अत्राधुना स मम लघुसहोदरः कुत्रास्ति? आर्यया गदितम्—'बाह्ये, येन त्वं रोधितोऽसि।' ततो हर्षान्निर्गतो बाह्ये राजा चन्द्रयशाः। नमी राजापि निजं वृद्धबान्धवं ज्ञात्वा हृष्टो बभूव। द्वावपि बान्धवौ सम्मुखमायातौ। ज्येष्ठबान्धवेनोत्थाय नमिः सस्वजे। वृद्धभ्रातोचिवान्। 'वत्स! पितुर्मरणं विलोक्य मम राज्यद्वेषः, परं राज्यधराभावादियत्कालं विलम्बितः। अधुना त्वं राज्यमलङ्कुरु, अहं दीक्षां ग्रहीष्यामि'इति वाक्यैर्नमी राजानं प्रतिबोध्य राज्येऽभ्यषिञ्चत्। चन्द्रयशा राजा दीक्षां जग्राह। नमी राजा सूर्य इव तपति। अन्यदा षाण्मासिको दाहज्वरो नमेरुत्पन्नः। औषधमन्त्रयन्त्रादिभिरुपायैः सहस्रैरपि नोपशाम्यति। ततो देव्यः स्वयं तदर्थं चन्दनं घर्षन्ति, तद्बाहुवलयश्रेणिकाणैर्नमेर्महत्यरतिर्जायते। ततस्तस्य नमे राज्ञ आदेशात् सर्वा अपि राज्यः कङ्कणान्युदतारयन्, क्रमेण यावदेकैककङ्कणं मङ्गलाय करे दधुः।

अथापृच्छन्नृपो 'देव्यः! किम घर्षन्ति चन्दनम्?
यत्रैष श्रूयते शब्द' स्ततो मन्त्रिजनोऽवदत्॥ २०॥

---

1. इदं for इति Z. 2. पापाकारं for पापाकरं A. 3. तद् द्वौ for तयोर्द्वयोर् A and B. 4. निविरह for निर्वाह Z.

'देव्यः सर्वा अपि स्वामिन्! घर्षयन्ति पुनः पुनः।
किन्त्वेकवलयत्वेन ततो न ज्ञायते ध्वनिः' ॥ २१ ॥

ततः प्रतिबोधो बभूव। यथा बहुभिः कङ्कणैर्दुःखं जातम्, अल्पैरल्पतरं सुखं जातम्। तथाऽतो दृष्टान्तादेकाकित्वे महासुखम्।

ततोऽसौ यदि मे दाहः प्रशाम्यति कथञ्चन।
सर्वसङ्गं परित्यज्य तदैकाकी भवाम्यहम् ॥ २२ ॥

इति चिन्तयन् नमी राजा सुप्तः। स्वप्ने श्वेतगजाधिरूढमात्मानं पश्यति। अथ प्रभाते शंखनूपुररवेण प्रतिबुद्धो राजा दध्यौ। अद्य प्रधानः स्वप्नो मया ददृशे। तस्यैवं चिन्तयतो जातिस्मरणं बभूव। यदहं पूर्वभवे चारित्रं पालयित्वा प्राणतकल्पे देवोऽभूवं ततश्च्युत्वा नमिर्जातः। राजा निजपुत्रं राज्ये संस्थाप्य दीक्षां गृहीतवान्। शासनदेवतया यतिवेषः समर्पितः, नगर्या निस्सृतः, इन्द्रेण परीक्षा कृता। विप्रवेषं धृत्वा तत्र समागतः। राज्ञः पुरो भूत्वैवं वदति—'राजन्! जीवदयां कुरु, एषा पुरी त्वां विना निस्स्वामिका क्रन्दति। तदिदमयुक्तम्।' मुनिराह—'लोकः स्वस्वकर्मकृतं फलं प्राप्नोति ततोऽहमपि स्वकार्यं कुर्वे। अन्यचिन्तया किं प्रयोजनम्?' विप्रेणोक्तम्—'मिथिला दह्यते पुरी।' मुनिराह—'मिथिलायां दह्यमानायां न मे दह्यति किञ्चन।' विप्र आह—'नगर्यां प्राकारं कारय।' मुनिनोक्तम्—'संयमपुरे उपशमप्राकारो विहितो नययन्त्रसंयुतः' इत्यादि बहुविधं भणितोऽपि यदैष न चलति तदा प्रत्यक्षीभूय नमिं नत्वेन्द्र इदमवदत्—

'तवैव श्लाघ्यते गोत्रं सत्त्वं[2] यस्यासमं मुनेः।
यश्च त्वं मोहपङ्केन न क्लेशमिव लप्स्यसे' ॥ २३ ॥

इत्येवं तं हरिं स्तुत्वा वन्दित्वा त्रिःप्रदक्षिणमुत्पपात नभसि[3] देवो दीप्यमानमणिकुण्डलः। एवं व्रतं परिपाल्य नमिः शिवं जगाम। मदनरेखापि चारित्रं शीलं परिपाल्य त्रिदिवं जगाम।

इति शीलव्रते मदनरेखाकथानकम् ॥

---

१. The portion 'अल्पैरल्पतरं सुखं जातम्' is missing in A.
२. सत्रं for सत्त्वं Z. ३. नभे for नभसि A and Z.

## नागदत्तकथानकम् ।

तप[1]ः सर्वाक्षसारङ्गवशीकरणवागुरा ।
कषायतापमृद्वीका कर्माजीर्णहरीतकी ॥ १ ॥

अत्र तपोविषये दृष्टान्तः। अत्रैव भरते कुसुमपुरं नाम नगरम्। तत्र नागचन्द्र इति नाम श्रेष्ठी वसति। तस्य नागदत्तनामा पुत्रः

विनीतः सततोत्साही मातृपितृप्रियः सुधीः ।
पुण्यवानाकृतिदक्षः सुतो भाग्येन जायते ॥ २ ॥

अन्यदा तेन नागदत्तेन जिनभुवने केनापि धर्मपारेण कारिता महापूजा जिनस्य दृष्टाऽष्टप्रकारा। पुत्रेणोक्तम्—'तात ! अहमपि निजं धनं निजभुजाभ्यामुपार्ज्येदृग्विधां पूजां करिष्यामि। यतः—

पियविढत्तइं डिंभडै[2] वुगु वुगु कुकु न करेय ।
सैं[3]इ विट विणसै विलसणाँ[4] विरला जणणि जणेइ ॥ ३ ॥

इति विचार्य देशान्तरं गन्तुकामो हट्टे उपविष्टः। अत्रान्तर एको ब्राह्मणः पञ्चशतद्रम्ममूल्येन श्लोकमेकं विक्रीणाति—

अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ।
कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि ॥ ४ ॥

नागदत्तः पञ्चशतद्रम्मैरिमं श्लोकमवाग्रहीत्। पिता कोपे चटितः। ईर्ष्यापरेणात्यर्थं तर्जितः, प्रवहणपञ्चशतैः सह समुद्रयात्रायां चचाल। यावता कियन्ति दिनानि यावत् समुद्रमध्ये प्रवहणानि प्रयान्ति तावद् भुजगवलयपर्वतकुम्भिका[5]यां पतितानि। अग्रे तत्रैव कुम्भिकायां प्रवहणमेकं पतितमस्ति यावन्नागदत्तः प्रवहणे गतस्तावत्तस्मिन् प्रवहणे एको नरो मर्तुकामो नागदत्तेनानशनपूर्वं नमस्कारदाने निर्यामितः। अथ तत्र शुकशतं[6] सुवर्णद्वीपवासिं[7] परार्थे[8] सुन्दरनृपस्यादेशेन वसतिं[9]। यः कोऽपि कष्ट पतितो भवति तं राज्ञोऽग्रे विज्ञपयतिं[10]। राजा ततः कष्टभञ्जनोपायं चिन्तयति। अथै-

---

१. तप for तपः Z. २. डिभडइ for डिंभडै Z. ३. सइ for सैं Z. ४. विलसणी for बिलसणा Z. ५. कुम्भका॰ for कुम्भिका॰ Z. ६. शतः for शतं A and Z. ७. ॰वासिनः for वासि A and Z. ८. परार्थ for परार्थं A. ९. वसन्ति for वसति A and Z. १०. विज्ञपयन्ति for विज्ञपयति A and Z.

कदा नागदत्तेन शुकपादे चीठी बद्धा। राजा चीठीवृत्तान्तं विज्ञाय भोजनं न[1] करोति। राज्ञा नगरमध्ये पटहो दापितः। तत्र वास्तव्येन केनापि निर्यामकेन[2] पटहः छिबितः—'अहमुपायेन समुद्रमध्ये प्रवहणकं भुजगवलयपर्वतकुम्भिकामध्यान्निष्कासयिष्यामि[3]। राज्ञा सुवर्णलक्ष-मूल्यं प्रदत्तम्। प्रवहणिकोऽपि प्रवहणे चटित्वा गतस्तत्र भुजग-वलयपर्वतद्वारे। नागदत्तस्याग्रे कथितम्—'यदि भवतां मध्यात्कोऽपि साहसं कुरुते तदा प्रवहणानि निस्सरन्ति।' नागदत्तेन वृद्धनिर्याम-कस्याग्रे कथितम्—'किं साहसम्?' प्रवहणकेनोक्तम्[4]—'अस्य भुजङ्ग-वलयस्य पर्वतस्योपरि इन्द्रनीलमणिमयं श्रीनेमीश्वरबिम्बं मणिमय-प्रासादे विद्यते। तस्मिन् प्रासादे महत्प्रमाणा ढक्काः सन्ति। यः कोऽप्यमुं वटवृक्षमवलम्ब्य पर्वते[5] गत्वा ढक्का वादयति[6] ततस्तासां नादभीताः कोटिसंख्या भारुण्डपक्षिण उत्पतन्ति। तेषां पक्षवातेन प्रवहणानि मार्गे चलिष्यन्ति इत्युक्ते नागदत्तः प्राह—'यः कोऽपि तत्र याति तस्याहं सुवर्णलक्षमेकं ददामि।' मृत्युभयात् तत्र [कोपि[7]] न याति। नागदत्तो लोकोपकारं विचिन्त्य साहसैकवीरो वटशाखा-मवलम्ब्य स्वयमेव तत्र जगाम। श्रीनेमीश्वरप्रासादे गत्वा श्रीनेमी-श्वरं प्रणम्य ढक्का वादिता। तासां नादेन भारुण्डपक्षिण उत्पतिताः। तेषां वातेन प्रवहणानि मार्गे लग्नानि। तत्र नागदत्तेन स्वयं सामा-यिकमादायाष्टाह्निकातपः प्रत्याख्यातम्। अत्रान्तरे चारणमुनिरुपागतो महामांसभक्षिप्रतिबोधनार्थम्। नागदत्तो मुनिं महाभक्त्या प्रणिपत्योचिवान्—'भगवन्! मेऽनशनं दीयताम्।' मुनिरुवाच—अद्यापि भवतो भोगफलं कर्म विद्यते। विद्याधरं प्रतिबोध्य महा-मांसनिषेधं विधाय मुनिराकाश उत्पपात। विद्याधरेण निजपुत्री नागदत्तस्य दत्ता। नागदत्तः पाणिग्रहणं चकार। विद्याधरेण नाग-दत्ताय विद्यामन्त्रौषधीद्रव्यसुवर्णरत्नादिकं यथेच्छं दत्वा विमानं रचयित्वा तस्मिन् विमाने स्वयं नागदत्तमुपवेश्य निजगृहे मुक्तः।

१. न is missing in Z. २. नार्यामकेन for निर्यामकेन Z. ३. निकासयिष्यामि for निष्कासयिष्यामि Z. ४. प्रवहणकेनोक्तम् is supplied by the Editor. ५. पर्वते for पर्वते Z. ६. वादयामास for वादयति A and Z. ७. Supplied by the Editor.

निजमातृपित्रोर्मिलितो नागदत्तः। प्रवहणान्यागतानि। वर्द्धापनकं बभूव। नागदत्तेन जिनप्रासादः कारितः। तत्र जिनप्रतिमा स्थापिता। स्वयंकारितप्रासादे त्रिवेलां याति। तत्र जिनबिम्बे पूजां रचयति। पुण्यं कुरुते।

इति अष्टाह्निकातपोविषये नागदत्तकथानकम् ॥

## सनत्कुमारर्षेः कथानकम्।

इहैव भरते कुरुदेशे हस्तिनागपुरं नाम नगरम्। तत्राश्वसेनो नाम राजा। सहदेवी नाम तत्पत्नी। अन्यदा चतुर्दशस्वप्नसूचितोऽतीव रूपवान् सनत्कुमारनामा पुत्रोऽभूत्। तस्य सनत्कुमारस्य सूरराजसुतो महेन्द्रसिंहनामा राजपुत्रो महामित्रं बभूव। सनत्कुमारः क्रमेण सकलाः कलाः पाठितः। अन्यदा यौवनारम्भे वसन्तोत्सवे मित्रेण सह क्रीडार्थं सनत्कुमारो वने गतः। तत्रोत्सवे कौतुकानि विलोकयति। अत्रान्तरे केनाप्यश्वपतिना कुमाराय प्रधानोऽश्व उपढौकितः। कुमारस्तस्मिंस्तुरगेऽधिरूढः। तेन तुरगेणापहृत्य दूरं नीतो राजकुमारः। राजा कुमारगवेषणाय चलितः। विलोकितोऽपि सनत्कुमारो न लब्धः पित्रा। ततोऽश्वसेनं निवार्य महेन्द्रसिंहो मित्रदर्शनाय स्वयमेव चचाल। एकं वर्षं महाटव्यां बभ्राम। अथैकदा सारसध्वनिं श्रुत्वा कमलगन्धमाघ्राय मधुरध्वनिं शृण्वन् यावदग्रे[1] याति तावत् सरोवर एको दृष्टः। तत्र सरोवरासन्ने कदलीगृहे स्त्रीवृन्दैरनुगम्यमानं सनत्कुमारं क्रीडन्तं ददर्श। वन्दीमुखादेकं स्तुतिश्लोकं पठ्यमानमशृणोत्—

कुरुदेशैक्यमाणिक्य! अश्वसेननृपाङ्गज!
श्रीमत्सनत्कुमार! त्वं जय त्रैलोक्यविश्रुत! ॥ १ ॥

इति पाठश्रवणेन महेन्द्रसिंहेन विमृष्टम्—निश्चितं सनत्कुमारोऽग्रे तिष्ठति। यावदग्रे विलोकयति तावद् दृष्टः कुमारः। महेन्द्रसिंहेन प्रणामो विहितः। मिलितः कुमारस्य[2]। अत्र महाहर्षः। 'भक्त्या महेन्द्रसिंहो भोजितः। कुमारेण पृष्टम्—'मम पितरौ कथं वर्तेते?'

---

१. अग्रे याति तावत् is missing in A. २. कुमारः or कुमारेण सह is suggested for कुमारस्य.

मित्रेणोक्तम्—'महता दुःखेन। परं ममाग्र आत्मीयं चरित्रं कथय।' कुमारेणोक्तम्—'आयाति बकुलमती नाम मम प्रिया विद्याधरी। प्रज्ञप्तिविद्याप्रभावाद् वृत्तान्तं ज्ञात्वा सर्वं मम चरित्रं तवाग्रे कथयिष्यति।' एवं निगद्य कुमारः सुप्तः। बकुलमती प्राह–'शृणु महेन्द्रसिंह! यदा कुमारोऽपहृतोऽश्वेन महाटव्यां पातितः, ततो द्वितीयदिनेऽपि तुरङ्गमस्तथैव याति। तृतीयदिवसे क्षुधातृषाक्रान्तो जिह्वां कृष्ट्वा तुरङ्गमः पतितः। तुरङ्गमादुत्तीर्णः कुमारः। तुरङ्गमो मृतः। सनत्कुमारोऽपि जलाप्राप्त्या भ्रान्ताक्षोऽचेतनो भूमौ पतितः। तत्र वनस्थितेनैकेन यक्षेण जलैः सिक्तः सचेतनो जातः। कुमारेण लब्धचैतन्येनोक्तम्—'यक्ष! एवंविधं शीतलं जलं क्व प्रवर्तते?' यक्षेणोक्तम्—'मानससरोवरे वर्तते।' कुमारः प्राह—'यदि तत्र स्नानं करोमि ततः शरीरतापो याति।' यक्षेण तत्र मानससरोवरे नीतः। तत्र स्नानं कृतम्। जलं पीत्वा यावत्सरोवरपाल्यामुपविष्टः कुमारस्तावत्पूर्वभववैरिणाऽसितयक्षेण दृष्टः। कुमारयक्षयोर्युद्धं बभूव। अत्रान्तरे महेन्द्रसिंहेन पृष्टा—'तेन यक्षेण सह कुमारस्य किं वैरकारणम्?' बकुलमती प्राह—'तर्हि श्रूयतां वैरकारणम्—पूर्वभवे श्रीकाञ्चनपुरे विक्रमयशो नाम नृपः। तस्य पञ्चशतानि स्त्रीणां सन्ति। तत्रैव नगरे नागदत्तो नाम व्यवहारी। तस्य भार्या विष्णुश्रीरत्यन्तरूपवती। अन्यदा राजवाटिकायां व्रजता विक्रमयशसा राज्ञा दृष्टा। तस्या रूपमोहितचित्तेन सा गृहीत्वा निजेऽन्तःपुरे क्षिप्ता। नागदत्तस्तस्या वियोगाद् दुःखेन तिष्ठति। राजा पूर्णमनोरथो दिनान्यतिक्रामयति। अन्यदा मात्सर्यात् शेषसपत्नीराज्ञीभिः कार्मण[1]प्रयोगेण विष्णुश्रीर्व्यापादिता। राजाऽतीव दुःखी बभूव। तस्याः संस्कारं कर्तुं न ददाति। प्रधानै राज्ञः प्रच्छन्नं सा विष्णुश्रीर्बहिस्त्यक्ता। राजाऽऽदिकानामभिग्रहं कृत्वा स्थितः। प्रधानै राज्ञोऽभिग्रहं ज्ञात्वा तृतीयदिवसे नगरोपवने गत्वा विष्णुश्रीर्दर्शिता। दुर्गन्धं कलेवरं वीक्ष्य वैराग्येण राज्ञा चारित्रं गृहीतम्। तपस्तप्त्वा तृतीयदेवलोके गतः। ततः सम्पूर्णे आयुषि च्युत्वा रत्नपुरे नगरे जिनवर्मा नाम वणिक् बभूव। इतश्च नागदत्तः प्रियाविरहार्दितो मृत्वा सिंहपुरेऽग्निशर्मा द्विजो जातः। कियति काले

1. कर्मणा for कार्मण A.

भते सत्यग्निशर्मा विप्रः त्रिदण्डिव्रतं जग्राह। तपः कुर्वाणोऽन्यदा राजगृहे नगरे गतः। तत्र नरवाहनेन राज्ञा पारणाय निमन्त्रितः। तदा जिनवर्मा वणिक् तत्रैवागतस्तेन त्रिदण्डिना[1] दृष्टः। पूर्वभववैरं स्मृतम्। राज्ञोऽग्रे इदं वचनमवदत्—'हे महाराज! यद्यस्य श्रेष्ठिनः पृष्ठे ताम्रपात्र्यां क्षीरान्नं कृत्वा पारणं करोमि, अन्यथा न, राज्ञा तत् कारितम्। श्रेष्ठिनः पृष्ठत्वग् उत्पतिता। श्रेष्ठिना पूर्वकर्मफलं सोढम्। चैत्यपूजां विधाय तुङ्गपर्वतशिखरेऽनशनेनैकं मासं स्थित्वा कायोत्सर्गाराधनया मृतः सौधर्मेन्द्रो जातः। त्रिदण्डी मृत्वा इन्द्रस्य वाहनमैरावणो बभूव। ततश्च्युत्वा तिर्यग् जातिषु भ्रान्त्वाऽज्ञानतपसाऽसिताक्षयक्षो जज्ञे। इन्द्रोऽपि च्युत्वा हस्तिनागपुरे सनत्कुमारश्चक्री बभूव। एतद् वैरकारणं जानीहि। ततो यक्षकुमाराभ्यां महायुद्धं कृतम्। लब्धलक्ष्येण कुमारेण यक्षो मुष्टिना हतः, देवत्वान्न मृतः, परं नष्टः। विद्याधरैः कुमारोपरि पुष्पवृष्टिः कृता। सनत्कुमारो यावदग्रे चलति तावदष्टौ भानुवेगविद्याधरसुता दृष्टास्तेन। भानुवेगेन[2] दत्ताः, कुमारेण परिणीताः। विवाहानन्तरमाबद्धकङ्कणः सुप्तः। किञ्चिज्जागरूकस्तावत् करुणास्वरं श्रुत्वा यावदग्रे याति तावद् रत्नशृङ्गगिरावेकं भुवनं दृष्टम्। स्त्रीकरुणास्वरं क्रन्दितमाकर्ण्य तत्र गतो विद्याधरान् बलेन निर्जित्य सुनन्दां स्त्रीरत्नं परिणीय तस्याः स्वसारं च सन्ध्यायां परिणिन्ये। वज्रवेगविद्याधरो जितः। कन्याशतं परिणीतम्। इतश्च सङ्ग्रामकाले चक्रं समुत्पन्नम्। यावद् बकुलमती एवं जल्पते तावत्सनत्कुमारस्य निद्रान्तो जातः। ततो महता परिवारेण वैताढ्ये गतः। ततो मित्रार्थितो हस्तिनागपुरं ययौ। अत्र प्रवेशविस्तरः। मातापित्रोर्मिलितः। नव निधानान्युत्पन्नानि। भरतक्षेत्रस्य षट्खण्डसाधनं कृतम्। अत्रान्तरे सौधर्मेन्द्रसभायामीशानदेवलोकादागतः[3] सङ्गमकः। तेजसा सभा उद्योतिता। देवैः पृष्टम्—'अहो! अस्य देवस्य सदृशी[4] प्रभाऽन्यस्य कस्यापि देवस्य[4] विद्यते?' इन्द्रेणोक्तम्—'हस्तिनागपुरनगरे मनुष्यरूपस्य सनत्कुमारस्य विद्यते प्रभा।' ततः प्रचलितौ द्वौ देवौ

---

१. त्रिदण्डिनं for त्रिदण्डिना Z. २. मान॰ for भानु॰ Z. ३. ॰सभाया ईशान॰ for ॰सभायामीशान॰ Z. ४. The portion beginning with सदृशी and ending with देवस्य is missing in Z.

परीक्षार्थं जरद्द्विजरूपेण चक्रवर्तिनमुपागतौ। पृष्टौ चक्रवर्तिना—'युवां कौ? कुत इहागमनम्?' तावूचतुः—'भवदीयरूपविलोकनार्थम्।' सनत्कुमारचक्रवर्तिनोक्तम्—'अधुना तैलाभ्यङ्गितदेहे रूपं नास्ति। सभावसर आगन्तव्यम्।' गतौ देवौ, स्नानं कृत्वा सिंहासनोपविष्टे चक्रवर्तिनि समागतौ। रूपं विलोक्य कृष्णवदनौ जातौ। चक्रवर्तिना पृष्टम्—'किमिदम्? कृष्णवदनौ युवाम्?' तावूचतुः—'रूपभ्रंशो दृश्यते।' चक्रवर्तिरूचे—'कथं जानीतः?' तावूचतुः—'देवत्वेन।' ततो देवौ प्रत्यक्षीभूय तं प्रशंस्य स्वस्थानं गतौ। राज्ञा वैराग्यपरेण विमृष्टम्—'रूपयौवनादिकाः पदार्थाः क्षणविनश्वराः। ततः किमनेन पापहेतुना राज्येन' इति विचार्य विनयन्धरगुरोः पार्श्वे दीक्षाऽङ्गीकृता। गीतार्थः सन् एकल्लविहारप्रतिमया विजहार। कृतषष्ठाष्टमादितपो[1]गोचरचर्यया परिभ्रमन् एकदा चीनककूरमजातक्रं लब्धवान्। तेन कदर्याहारेण सप्त व्याधयः सञ्जाताः—

शुष्ककच्छुर्ज्वरः श्वासः कासश्चान्नारुचिस्तथा।
अक्षिदुःखं हृदो दुःखं सप्तैतेऽत्यन्तदारुणाः॥ २॥

सप्तवर्षशतानि सप्तरोगदुःखं सेहे राजर्षिः[3], व्याधिप्रतीकारं न करोति। इन्द्रेण सभासमक्षं प्रशंसितः। द्वौ देवौ परीक्षणार्थं वैद्यरूपं विधायागतौ मुनिसमीपे। राजर्षिर्वन्दितः। कथितश्च—'शरीरचिकित्सकावावाम्।' मुनिनोक्तम्—'अहं बाह्यरोगाणां प्रतीकारं न कारयामि किन्त्वन्तरङ्गरोगाणाम्। वैद्यौ कथयेते—'तद्वयं न जानीमः।' मुनिनोक्तम्—'एतत्प्रतीकारमहमपि न[2] जानामि।' एकां गलितामङ्गुलिं श्लेष्मणा सह विलिप्य पुनर्नवीकृतवान्। प्रशंसां कृत्वा देवौ स्वस्थानं गतौ। एवंविधं तपः सम्पूर्णं विधाय राजर्षिस्तृतीयदेवलोके गतः॥

इति तपोविषये राजर्षिसनत्कुमारकथा॥

## भावनाविषये अमरचन्द्रकथानकम्।

भावना सकललोकपावना सम्भवेद्भवविनाशकारिता।
भावना[4] नाम(?)[5]धुमतिप्रिया सर्वपापनिचयक्षयङ्करी॥ १॥

---

१. ०तया for तपो Z. २. न is missing in Z. ३. Z. adds लक्षवर्षायुप्रयाल after राजर्षि. ४. भावि for भाव० Z. ५. One syllable is too short in this *pāda*.

भावनासदृशी दूती न भूता न भविष्यति ।
या करोत्यमरस्त्रीणां मानुषैः सह सङ्गमम् ॥ २ ॥

अत्रैव भरतक्षेत्रे रत्नाकरं नाम नगरम् । तत्र सुरसुन्दरो नाम राजा न्यायेन जनं पालयति ।

छत्रेषु दण्डश्चिकुरेषु बन्धः सारीषु मारिश्रवणं जनानाम् ।
हारेषु च छिद्रविलोकनानि यस्मिन् विवाहे करपीडनानि ॥ ३ ॥

इत्थं नीतिवर्णनम् । तस्य विलासवती नाम राज्ञी । महास्वप्नसंसूचितः अमरचन्द्रनामा कुमारः, षोडशवर्षीयो द्विसप्ततिकलासंयुक्तः । अन्यदा अमरचन्द्रकुमारो मध्यरात्रौ पल्यङ्के सुप्तो विलापकरुणस्वरं करोति—'अस्ति कोऽपि क्षत्रियकुलसम्भवो महावीर्यसम्पूर्णो धात्र्याम् ? किं निर्वीरा धात्री ? एवमपि विलापं श्रुत्वा न करोति यो मे उद्धारम् ?' अमरचन्द्रकुमारोपि प्रचलायां निद्रायां प्रचलायमानः शब्दमाकर्ण्य क्षात्रभावात्खड्गं करे गृहीत्वा किरणं दत्त्वा दुर्गं समुल्लङ्घ्य वनान्तरं प्राप । यावच्छब्दानुसारेणाग्रतो याति तावत् किं पश्यति—एकः पुरुषः स्त्रियं वेणीदण्डे धृत्वा खड्गमाकृष्य भाययन्नस्ति । कुमारेण हाकितः पुरुषः—'रे रे दुराचार ! दुष्ट ! पापिष्ठ ! ममाग्रे तिष्ठ । क्व यास्यसि मयि समागते इमां स्त्रियं मारयन् ? अबलां स्त्रियं मुञ्च । मया समं कुरु सङ्गमम् ।' विद्याधरः प्राह—'हे कुमार ! बाल ! धवल ! सुकुमार ! दुग्धभृतवदन ! मया सह साहसं मा कुरु । अत्र मोदका न लभ्यन्ते । व्रज पश्चात् । अतीव साहसिकोऽसि ।' कुमारः साटोपं प्राह—'रे रे दुष्ट ! पापिष्ठ ! क्व यास्यसि खेचराधम ?' यावदित्थं वीरैर्वाक्यैर्विद्याधर आच्छोटयति तावदकस्मादुद्योतो जातः । उद्योतभयान्नष्टो विद्याधरः । अमरचन्द्रकुमारेणोक्तम्—'हे अबले ! का त्वम् ?' तयोक्तम्—'वैताढ्यदक्षिणश्रेण्यां गगनवल्लभं नाम पुरम् । तत्र पवनगतिर्नाम विद्याधरः, तस्य पुत्री चित्रलेखा । अहमन्यदा गवाक्षस्था विद्याधरवासवेनापहृता । तेनात्रानीता । तावत् त्वया रक्षिता । अयं किरणावलिर्नाम मम भर्ता भविष्यति ।' तावत् किरणावलिना चित्रलेखा पृष्टा—'भद्रे ! कोऽयं पुमान् ?' सा प्राह—'अनेन विद्याधरपार्श्वादहं रक्षिता ।' तुष्टः किरणावलिः । कुमारस्य परकायप्रवेशविद्या दत्ता । 'सङ्गमकाले

हारप्रभावात्तव हारिर्न भविष्यति' इत्युक्त्वा एको हारः समर्पितः। सर्वेऽपि स्वस्थानं गताः। कुमारेण पितुरग्रे रात्रौ वृत्तान्त उक्तः। राज्ञा तस्यासमसाहसात् कुमारभुक्तिः[1] प्रदत्ता। अत्रान्तरे दूतः समागतः। राज्ञोऽग्रे सभायां विज्ञप्तिकां करोति—"श्रीपुरनगरे श्रीषेणो नाम राजा। तस्य पुत्री जयश्रीर्यौवनाभिमुखी जाता। अन्यदा राज्ञा पृष्टा—'वत्से! भवत्याः कीदृशो वरः करिष्यते? किं गुणवान्? किं रूपवान्? किं वा धनवान्?' पुत्री प्राह—'कुलीनः प्रेमवान् विलोकनीयो वरः।' राजा प्राह—'वत्से! स कथं ज्ञास्यते?' यावदिति चिन्ताप्रपन्नो रात्रौ सुप्तः किञ्चिज्जागरन्नस्ति तावत्स्वप्ने गोत्रदेव्योक्तम्—'राजन्! स्वयंवरमण्डपः कारयितव्यः। दृष्टिदर्शनेन योऽस्या रोचते स वरः।' ततोऽहं राज्ञा प्रेषितः—'अमरचन्द्रकुमारं प्रेषयत' इति।"[2] राज्ञा कुमारः प्रेषितः। महोत्सवेन नगरमध्ये प्रवेशितः। अथ स्वयंवरदिवसेऽद्भुतवेषाः सर्वे राजकुमारा मञ्चेषूपविष्टाः। जयश्रीर्दिव्यवेषं विधाय प्रतीहारीयुक्ता समागता। सर्वान् कुमारान् परित्यज्य अमरचन्द्रस्य कण्ठे वरमाला क्षिप्ता। अन्यैः कुमारैः कथितम्—'हे अमरचन्द्रकुमार! अस्मान् दृष्ट्वा पाणिग्रहणं करणीयम्' इति श्रुत्वा कुमारेण चिन्तितम्—'यदर्थमियान् प्रयासो विधीयते प्रथमं वल्लभाया रागविरागौ विलोकयिष्यामि। यतः—

ददाति रागिणी प्राणान् गृह्णाति द्वेषिणी पुनः।
रागो वा यदि वा द्वेषः कोऽप्यपूर्वो वरस्त्रियाम्॥ ४॥

उक्तञ्च—

शस्त्रेण वेणीविनिगूहितेन विदूरथं स्वा महिषी जघान।
विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजम्'॥ ५॥

मित्रामात्येन सहालोच्य कुमारेण मिषान्तरं चक्रे—यन्मे शीर्षे व्यथते इति। कुमारेण परकायप्रवेशविद्या कृता। कुमारो मृत इति वार्ताऽभूत्। कुमारी इति वचः श्रुत्वा काष्ठानि याचते। पितृप्रभृतिभिः सर्वलोकैः कुमारैर्वारितापि[3] सर्वथा न तिष्ठति। कुमारा

१. कुमालरभुक्त्यः for कुमारभुक्तिः Z. २. The portion प्रेषयत इति राज्ञा कुमारः is missing in A. ३. सर्वा॰ for सर्व॰ Z.

वदन्ति—'अस्माद् भयाद् असौ राजकुमारोऽमरचन्द्रो मृतः।' कुमारी श्वेतशृङ्गारं विधाय तुरगाधिरूढा, अमरचन्द्रनिमित्तं या चिता कृता वर्तते तस्याः समीपे गता। अमात्येनोक्तम्—'कुमारा इति वचनं वदन्ति यदसावमरचन्द्रकुमारोऽस्मद्भयेन विनष्टः। ततोऽनेन कलङ्केनास्मिन् कुले मृता अपि जीवन्ति।' कुमारैरुक्तम्—'यदि शक्तिरस्ति ततोऽमरचन्द्रकुमाराय जीवदानं दीयताम्' इत्युक्तेरनन्तरं पूर्वजया विद्यया सद्यो जीवितः[1] कुमारः। मिथो वदन्ति कुमाराः—'युद्धं विधाय पाणिग्रहणं कुरु, अन्यथा न।' युद्धसन्नद्धः कुमारो हारप्रभावाद् रिपूनजयत्।' पाणिग्रहणं कृत्वाऽमरचन्द्रः स्वनगरं गतः। प्रवेशमहोत्सवो बभूव। तावत्प्रेरणीयैः सुरसुन्दरस्य राज्ञोऽग्रेऽवसरो[2] मण्डितोऽस्ति। वंशे त्रिपुत्रिकात्र नृत्यं करोति। अत्रान्तरे गगनमार्गेण चारणश्रमणौ[3] उपागतो व्याख्यानं कुरुते—'राजन्! अन्तरङ्गनाटकं विलोकय, बाह्यनाटकं किमवलोकयसि, यतस्तव स्थितिरियं रङ्गभूमिः। महानामा वंशः। चतस्रो गतयः। चत्वारः दाराः[4]। चत्वारः कषायाः। कीलकाः क्रोधमानमायालोभादयः। अष्ट कर्ममर्दलानि। मनुष्यरूपाणि वेषकराः। अयं जीवो नर्तकः।' इत्थं चारणमुनिना बोधितो राजा। कुमारं राज्ये निवेश्य सुरसुन्दरो व्रतं जग्राह। अमरचन्द्रो जयश्रीयुतो राज्यं करोति। राजा महाविषयी। अन्यदा राज्ञा जयश्रीभुवने पुमान् दृष्टः। कुमारेण हाकितः। यावद्भटानां सन्नद्धतां कर्तुं सभायामायाति तावत् सभायां सिंहासनासीनः स एव पुमान् दृष्टः। परं राज्ञः सदृश एव। राजा नगरान्निस्सृतो बहिर्जगाम। तावत् कुरुचन्द्रनामाऽमात्यो दलं गृहीत्वा तस्य मारणाय मुत्कलितः। अमात्योऽपि तं दृष्ट्वा विस्मितः। मन्त्रिणा पृष्टम्—'कस्त्वम्?' तेनोक्तम्—'अमरचन्द्रो नाम राजा।' मन्त्रिणा मर्माणि पृष्टः। सर्वं कथितम्। द्वौ दिव्यं कारितौ। द्वावपि शुद्धौ। देवेन विद्याबलेनामरचन्द्रस्य राज्ञः परकायप्रवेशविद्या विस्मारिता। अमात्येन निष्कासितो विदेशं गतो राजा। कालकरणाय पर्वते चटितः। कामाश्रावर्णीं करोति। तावद् गुहायां कायोत्सर्गे स्थितेन मुनिना

---

1. जीवति for जीवितः Z. 2. ऽवसरो is missing in A.
3. श्रमण is missing in A. 4. ॰दराः for दारा A.

भव्यजीवमेवलोक्य गाढस्वरेणोक्तम्—'राजन्! साहसं मा कुरु।' राजैतच्छ्रुत्वा विस्मितः। तत्र गत्वा मुनिर्नमस्कृतः। मुनिनोक्तम्—'राजन्! किं वैराग्यं प्रपन्नः?' राज्ञोक्तम्—'भगवन्! किंकारण-महं राज्यान्निष्कासितः?' मुनिः प्राह—"राजन्! पूर्वभवे मेघपुरे नगरे मेघरथो नाम राजा। तस्य मन्त्री प्रियङ्करो नाम, व्ययकर्ता शुभङ्करः। परं प्रियङ्करः सम्यक्त्वधारी विवेकवान्। अन्यदा रात्रौ देशावकाशिकव्रतं गृहीतम्। रात्रौ गृहद्वारे न गन्तव्यमिति देशावकाशिकम्। इतश्च राज्ञा मन्त्रिण आकारणं प्रेषितम्। न याति मन्त्री। राजा सकोपनः। 'नायाति चेत्तदा मुद्राऽऽनेतव्या।' मुद्राऽर्पिता, न पुनर्नियमस्य भङ्गः। राज्ञा शुभङ्करस्याग्रे कथितम्—'त्वं गृहाण।' तेन कथितम्—'नहि नहि, शरीरेऽपि दत्ते नृपस्याग्रे घटिकायुग्ममपि पुण्यं कर्तुं न लभ्यते तत् किमनेन राज्येन?' राजा सविषादमाह—'किं करोमि?' मन्त्री प्राह—'सबहुमानं प्रियङ्करस्य पुनरेव मुद्रा दीयताम्।' राज्ञा गृहे गत्वा मनावितो मन्त्री। मन्त्रिणोर्मिथो महान् स्नेहः। द्वाभ्यां पर्यन्ते व्रतं गृहीतम्[2]। शुभङ्करेण प्रियङ्करस्याग्रे कथितम्—'समये त्वयाऽहं बोधनीयः।' 'तथा' इत्युक्त्वा द्वावपि स्वर्गं गतौ। 'अयं प्रियङ्करजीवो देवो येन त्वं राज्यान्निर्वासितः। त्वं शुभङ्करजीवोऽमरचन्द्रो नाम।" अतः कारणात् स देवस्तत्रैव प्रत्यक्षो बभूव। देवेनोक्तम्—'तव बोधनायाहमागतः। राज्या उपरि विरूपं न चिन्तनीयम्। एतानि मम रूपाणि' इति श्रुत्वा राज्ञो जातिस्मरणमुत्पन्नम्। देवेन राजा स्वस्थाने मुक्तः। पुत्रं राज्ये निवेश्य अमरचन्द्रोऽपि व्रतं पालयित्वा मोक्षं गतः॥

इति भावनाविषये अमरचन्द्रकथानकम्॥

## अक्षतपूजाविषये शुककयुग्मकथा।

अखंडफुट्टियसुक्खखएहिं[3] पुंजत्तयं जिणिंदस्स।
पुरउ नरा कुणंता पावंति अखंडियसुहाइं॥ १॥
जह जिणपुरउ सुक्खखएहिं पुंजत्तयं कुणंतेहिं।
किरमिहुणेण पत्तं अखंडियं सासयं सुक्खं॥ २॥

---

१. ०जीव अव० for ०जीवमव० Z. २. गीतम् for गृहीतम् A. ३. दुखखएहिं for सुक्खखएहिं Z.

अस्मिन् भरते कीरमिथुनेन शुकयुग्मेन जिनपुरतोऽक्षतान् प्रयच्छता शाश्वतं सौख्यं प्राप्तमित्यर्थः । यथेति दृष्टान्तः ।

अस्मिन् भरते सिद्धपुरं नाम नगरम् । तस्य बाह्योद्याने श्रीयुगादिनाथचैत्यं वर्तते । तस्य जिनमन्दिरस्याग्रे सहकारमहावृक्षोऽस्ति। तस्मिन् शुकमिथुनं वसति । इतश्चान्यदा शुकस्त्रियाऽऽत्मभर्ता एवं भणितः—'शुक ! शालिक्षेत्राच्छीर्षमानय, मम दोहदो वर्तते ।' शुकः प्राह—'प्रिये ! श्रीकान्तराज्ञ एतत् क्षेत्रम् । य एतस्माच्छालिक्षेत्राच्छीर्षं गृह्णाति राजा तस्य शीर्षं गृह्णाति[1] ।' इति श्रुत्वा शुक्या भणितम्—'स्वामिन् ! तव समानः कोऽपि कापुरुषो नास्ति । निजभार्यां म्रियमाणां निजजीवितलोभेन वाञ्छसि । एवं शुकीवचनं श्रुत्वा शुको निजजीवितस्यापि निरपेक्षो जातः । शालिक्षेत्राच्छालिशीर्षाण्यानयति । एवं नित्यं शुकः शालिरक्षकाणां रक्षतामपि प्रियार्थं शालिशीर्षाण्यानयति । अथान्यदा राजा तस्मिन् क्षेत्रे समागतः । एकस्मिन् प्रदेशे तच्छालिक्षेत्रं पक्षिभिर्भक्षितं पश्यति । राज्ञा शालिरक्षकाः पृष्टाः—'रे ! पक्षिभिर्विनाशितं कथं क्षेत्रम् ?' ततश्च शालिरक्षकैरुक्तम्—'स्वामिन् ! एकः शुको नित्यं शालिशीर्षाणि गृहीत्वा याति । रक्ष्यमाणोऽपि चौर इव नश्यति ।' ततः क्रुद्धेन राज्ञोक्तम्—'भोः पाशान्मण्डयित्वा स शुको धृत्वा मम समीप आनेतव्यो यथा तं चौरवद्धन्मि ।' अथान्यदा राजादेशेन तैः पुरुषैः पाशे पातयित्वा शुको गृहीतः । ततो राजसमीपे शुकेन सह गताः । अथ तस्य शुकस्य भार्याऽऽक्रन्दन्ती शुकपृष्ठे समागता । इतश्च तैः पुरुषै राजसमीपे शुको मुक्तः । 'स्वामिन् ! येन शालिक्षेत्रं विनाशितम् एष स शुकः ।' राजा तं दृष्ट्वा खड्गं यावन्निहन्ति तावत्तस्य पत्नी निजस्वामिनोऽन्तरे पतिता । शुकी राजानं प्रति भणति—'स्वामिन् ! मां हन, परन्तु मम जीवितव्यदायकं मम भर्तारमेनं विहंगराजं परिमुञ्च । अनेन मम भर्त्रा[2] निजप्राणान् तृणीकृत्य मम जीवितं दत्तम् । देव ! तव शाल्या उपरि मम दोहदो जातः, अनेन परिपूरितः ।' इति श्रुत्वा विहस्य राजा शुकं प्रति प्राह—'शुक ! त्वं पण्डित इति

---

१. The portion 'राजा तस्य शीर्षं गृह्णाति' is missing in A.
२. The portion beginning with मम भर्त्रा and ending with अनेन is missing in A.

नाम्ना ख्यातोऽसि। ततो महिलाकार्ये निजजीवितव्यं त्यजन् कथं पण्डितोऽसि ?' इतश्च शुकी भणति—'स्वामिन्! जननीजनकबान्धवादयः सन्तु दूरे, पुरुषो महिलाकार्ये निजजीवितव्यमपि त्यजति यथा त्वया पूर्वं श्रीदेवीकृते निजजीवितव्यं त्यक्तम्। कथमस्य शुकस्य दोषः ?' राजा तस्या वचनेन विस्मितो वूयते, चिन्तयति—'एषा पक्षिणी मम वृत्तान्तं कथं जानाति ? राजा प्राह—'हे शुकि ! अत्राहं कथं दृष्टान्तः कृतस्त्वया ? एतत् सर्वं कथय । ममातिगुरुकं कौतुकं विद्यते।' शुकी भणति—'स्वामिन्! तव नगरे पूर्वमेका योगिनी बभूव, परं बहुकूटकपटभरिता सा तव भार्यया बहूपचरिता। अन्यदा तव भार्यया श्रीदेव्या सा योगिन्येवं पृष्टा—'भद्रे! सर्वासां राज्ञीनां मध्येऽहं दौर्भाग्या जाता । अतस्त्वं कमपि प्रसादं कुरु यथाऽहं राज्ञो वल्लभा भवामि।' ततो योगिन्या तस्या वशीकरणमन्त्रो दत्तः। तस्य प्रभावेन राज्ञो वल्लभा बभूव। सर्वासामन्तःपुरीणां मध्येऽग्रमहिषी जाता, ततो यदृच्छया दानं ददाति, भोगान् भुङ्क्ते। अन्यदा तथैव योगिन्या राज्ञी पृष्टा—'देवि! सम्पन्ना तव मनोरथसिद्धिः ?' तयोक्तम्—'देवि! सर्वमस्ति तव प्रसादात्। तथापि राज्ञा सह स्नेहपरीक्षा क्रियते, मयि जीवत्यां जीवति, मयि म्रियमाणायां म्रियते राजा। एषा स्नेहपरीक्षा।' योगिन्योक्तम्—'यद्येवं ततो गृहाणौषधीर्नास्यः यथा त्वं गतजीवा भवसि। पश्चादहं द्वितीयमूलिकया त्वां जीवयिष्यामि।' राज्ञा ओषधिवलकं गृहीतम्। योगिनी निजस्थाने गता। इतश्च सा श्रीदेवी राज्ञी ओषधीर्नास्यो गृहीत्वा राज्ञः पार्श्वे सुप्ता। प्रभातकाले मृता दृष्टा। इतश्च राज्ञो भुवने आक्रन्दस्वर उच्छलितः। 'देवी मृता, देवी मृता' इति भणित्वा सर्वे लोका आक्रन्दन्ति। ततो राजादेशाद्बहवो मन्त्रयन्त्रनिपुणा मिलिताः। तैरपि सा परित्यक्ता। ततो मन्त्रिभी राजा विज्ञप्तः। 'स्वामिन्! अस्याः संस्कारो भवतु।' राज्ञोक्तम्—'अनया सह ममाप्यग्निसंस्कारो भवतु।' लोको भणति—'स्वामिन्! न युज्यते एवं कर्तुं महिलाकृते पुरुषस्य मरणम्।' राज्ञोक्तम्—' स्नेहेन किं न [1]विधीयते ?' ततः शीघ्रं चन्दनकाष्ठानि सज्जीकुरुते। एवं भणितोऽपि राजा न तिष्ठति। ततो

१. ती is missing in A.

वाद्यमानतूर्यरवे रुदति पौरलोके गतो राजा। श्मशानभूमौ यावच्चितां कृत्वा प्रियतमासहितो राजाऽग्नौ प्रविशति तावद् दूरादपि रुदनं कुर्वती एका योगिनी समागता। तया भणितम्—'देव ! त्वमेवं साहसं मा कुरु।' राज्ञा भणितम्—'भगवति मम प्रियया सह जीवितव्यम्।' योगिनी प्राह—'यद्येवं ततः क्षणमेकं विलम्बस्व यथा लोकप्रत्यक्षं दयितां जीवापयामि।' राजैवं श्रुत्वा प्रमोदपूर्णहृदयो बभूव। ततो[1] द्वितीयमूलिकया नास्ये दत्ते राज्ञी निरामया बभूव[1]। तां जीवितां दृष्ट्वा राजोर्ध्वबाहुर्नृत्यति। ततो राजा श्रीदेवीसहितो राज्यं करोति। योगिनी मृत्वा शुकी जाता। साम्प्रतं तव पार्श्वे स्थितां श्रीदेवीं वीक्ष्य मम पूर्वभवः स्मृतः।" इतश्च शुकीवचनं श्रुत्वा देवी प्राह—'भगवति ! कथं त्वं पक्षिणी जाता।' शुकी प्राह—'देवकर्मवशेन जीवाः सर्वमनुभवन्ति।' राजैवं श्रुत्वा शुकमिथुनं प्रति परितुष्टः। शुकस्याभयदानं दत्तम्। शालिरक्षकं पुरुषं प्रत्येवमुक्तम्—'क्षेत्रस्य समीपे एतस्य शुकमिथुनस्य प्रतिदिवसं तण्डुलानां द्रोण एको मोचनीयः' इति श्रुत्वा शुकमिथुनमुड्डीय सहकारवृक्षे गतम्। तत्र सम्पूर्णदोहदा शुकी अण्डकयुग्मं प्रसूता। इतश्च तस्मिन् समये तस्याः सपत्नी शुकी निजकीयेऽङ्गशाले एकमण्डकं प्रसूता। यावत्सा चूर्णिनिमित्तं गता तावत् प्रथमा शुकी तस्या अण्डकं मत्सरेणानयति। यावत्साऽऽगता निजमपत्यं विलोकयति तावन्न पश्यति[2]। ततो मूर्च्छिता धरणीतले पतिता। तां विलपन्तीं वीक्ष्य प्रथमया पुनरपि तदण्डं तत्रैव मुक्तम। धरणीतले लुठित्वा यावत्पुनर्निजेऽङ्गशाले सा द्वितीया शुकी आयाति तावद् दृष्टं निजमपत्यम्। ततो हृष्टा जाता। प्रथमया शुक्या तन्निमित्तं कर्म बद्धम् यत् पश्चात्तापेन तदण्डं पश्चान्मुक्तं ततः कारणादेकभवदुःखं बद्धम्। तस्मिन्नण्डकयुगले एकः शुकः, एका शुकी जाता। राजादेशेन रचिते तस्मिन् तण्डुलराशौ तन्मिथुनं तण्डुलानानीय निजापत्यपोषणं करोति। इतश्चान्यदा तस्मिन् जिनभुवने एकश्चारणश्रमणो मुनिर्ज्ञानधरः समागतः। राजा नरनारीवृन्देण सहितो

1. The portion beginning with ततो and ending with बभूव is missing in Z. २. The portion तावन्न पश्यति is missing in A.

मुनिवन्दनाय समागतः। ततो गुरून् नमस्कृत्य राजाऽक्षतपूजाफलं पृच्छति। ततो गुरुः प्राह—

'अखंडफुट्टियसुक्खखएहिं[1] पुंजत्तयं जिणंदस्स।
पुरउ[2] नरा कुणंता पावंति अखंडियसुहाइं ॥ ३ ॥'

इत्यक्षतपूजाफलं श्रुत्वा सर्वो लोकोऽक्षतपूजाविषय उद्यमपरो जातः, अक्षतपूजां करोति। तथाऽऽवाभ्यामप्यक्षतपूजा क्रियते। ततो द्वावप्यक्षतपूजां कुरुतः। अन्यदाऽपत्ययुगलं भणितम्—'युवामपि जिनेन्द्रस्याग्रेऽक्षतान् मुञ्चत यथाऽक्षतसौख्यं भवति'; इति प्रतिदिवसं महाभक्त्या जिनेन्द्रस्याक्षतपूजां विधायाऽऽयुःक्षये चत्वारो मृत्वा देवलोके गताः। देवभोगान् भुक्त्वा शुकजीवो हेमपुरे नगरे हेमप्रभो नाम राजा बभूव। शुकीजीवोऽपि दे[3]वलोकाच्च्युत्वा जयसुन्दरी नाम हेमप्रभस्य भार्या बभूव। सा पश्चिमा शुकी अपि संसारे परिभ्रम्य हेमप्रभराज्ञो रतिनामा अन्तःपुरी जाता। अन्या अपि तस्य पञ्चशत भार्याः सन्ति। परं पूर्वभवस्नेहात्प्रथमे द्वे भार्ये वल्लभे संजाते। अन्यदा तस्य राज्ञो दुःखज्वरतापो[4] बभूव। क्षणं भूमौ लुठति, क्षणं चन्दननिलिप्तगात्रः, क्षणं शय्यायाम्, तथापि निर्वृतिं न प्राप्नोति। ततो मन्त्रयन्त्रकुशला वैद्याः प्रतीकारं कुर्वन्ति, परं कस्यापि राज्ञः प्रतीकारो न लगति। ततश्च शान्तिकं क्रियते। जिनमन्दिरेषु श्रीजिनेश्वराणां महापूजा विधीयते। गोत्रदेवताः पूज्यन्ते। ततोऽपि राज्ञः शरीरे ज्वरतापो नोपशाम्यति। इतश्च रात्रिसमये राक्षस एकः प्रत्यक्षीभूय राजानमूचे—'राजन् सुप्तोऽसि किं वा जागर्षि?' राज्ञोक्तम्—'कुतो मम निद्रा?' राक्षसः प्राह—'यद्येका राज्ञी आत्मानमवतार्य अग्निकुण्डं परिक्षिपति ततस्तव जीवितव्यम्, अन्यथा नास्ति।' एवमुक्त्वा राक्षसो निजस्थानं गतः। राजा चिन्तयति—'किमिन्द्रजालमिदम्? अथवा दुःखपतितेन मयैवंविधः स्वप्नो लब्धः? अथवैष न स्वप्नो यत् प्रत्यक्षो राक्षसो दृष्टः?' इतश्च प्रभाते प्रबुद्धेन राज्ञा सुमन्त्रिणोऽग्रे रात्रिवृत्तान्तः कथितः। तेनोक्तम्—'जीवनकार्ये एतदपि

१. दुखएहिं for सुक्खखएहिं Z. २. पुजउ for पुरउ A. ३. ऽपि देव is missing in A. ४. तापो is missing in Z. ५. The portion beginning with तेनोक्तम् and ending with कथितः is

क्रियताम् ।' ततः सर्वासां राज्ञीनामग्रे मन्त्रिणा राक्षसवृत्तान्तः कथितः। एतद् वृत्तान्तं श्रुत्वा निजजीवितव्यलोभेन सर्वा अपि राज्योऽधोमुख्यो बभूवुः । इतश्च विकासितमुखकमला रतिमहादेवी एवं भणति—'मम जीवितव्येन यदि राजा जीवति ततो मया किं न प्राप्तम् ।' ततो मन्त्रिणा गवाक्षस्याधो महदग्निकुण्डं कारितम् । सापि कृतशृङ्गारा राजानमेवं भणति—'स्वामिन् ! मम जीवितेन जीवस्व, अहमग्नौ प्रविशामि ।' राजा भणति—'देवि मम कृते जीवितव्यं मा त्यज । अहं पुराकृतं कर्म स्वयमेवानुभविष्यामि ।' ततो राज्ञी भणति—'स्वामिन् ! तव कृते यदि जीवितव्यं याति तद् यातु' इत्युक्त्वा गवाक्ष आरूढा यावदग्निकुण्डे पतति तावत्तस्याः सत्त्वेन परितुष्टो राक्षस आह—'भद्रे ! अहं तव सत्त्वेन परितुष्टः, ततः प्रार्थय मनीषितम् ।' राज्ञी प्राह—'जननीजनकाभ्यां दत्तो हेमप्रभो नाम राजा मम वरः । अतोऽहं तमेव प्रार्थयामि । अन्येन मम नास्ति प्रयोजनम् ।' राक्षसः प्राह—'तथापि प्रार्थयस्व यतोऽमोघं देवदर्शनम् ।' राज्ञी प्राह—'यद्येवं मम भर्ता व्याधिरहितश्चिरकालं जीवतु ।' राक्षसः प्राह—'एवं भवतु' इत्युक्त्वा गतो निजस्थाने राक्षसः । ततो राजा परितुष्टः । 'देवि ! वरं प्रार्थय, त्वया जीवितव्यमूल्येन वशीकृतोऽहम् ।' राजा प्राह—'यद्येवं तदेष वरो भाण्डागारेऽस्तु, यदा प्रार्थयामि तदा दातव्यः ।' इतश्चान्यदा रतिमहादेव्या पुत्रार्थिन्या कुलदेव्याराधिता । एवमुक्तश्च—'यदि मम पुत्रो भविष्यति ततो जयसुन्दरीपुत्रेण तव बलिं दास्यामि ।' भवितव्यतावशेन द्वयोर्बहुलक्षणसम्पूर्णौ पुत्रौ जातौ । रतिमहादेवी परितुष्टा चिन्तयति—'कुलदेवतया मम पुत्रो दत्तः ।' ततो 'जयसुन्दरीपुत्रेण पूजा कथं कर्तव्या' इति चिन्तयन्त्या तयोपायो लब्धः । राजदत्तवरेण समीहितं करिष्यामि इति विचिन्त्याऽन्यदा प्रस्तावं प्राप्य राजा विज्ञप्तः—'स्वामिन् ! पूर्वोक्तं वरं देहि ।' राज्ञोक्तम्—'एवं भवतु ।' ततो राज्ञी पञ्चदिनानि यावद् राज्यं करोति । इतश्च रजनीपश्चिमे प्रहरे जयसुन्दरीपुत्रमानाययति । तं स्नपयित्वा चन्दनपुष्पा-

---

missing in A. १. तव is missing in Z.

क्षतैः परिपूज्य पटल्युपरि कृत्वा दासीमस्तके स्थापयति। ततो वाद्यमानतूर्येण परिवारसहिता देवीपूजनाय चचाल। इतश्च काञ्चनपुरस्वामिना सूरिनाम्ना विद्याधरेण विमानारूढेनाकाशे गच्छता पटलीसंस्थितो बालको दृष्टः। ततोऽन्यं मृतबालकं मुक्त्वा स राजपुत्रो गृहीतः। विद्याधरः स्वस्थाने गतः। निजभार्यायाः समर्पितः कुमारः। इतश्च रतिमहादेव्या तत्र देवीभुवने तं मृतबालं शिलातल आस्फाल्य निजमनोरथः सम्पूर्णः कृतः। जयसुन्दरी पुत्रविरहे महाकष्टेन दिवसान् गमयति। तत्र विद्याधरनगरे तेन सूरिविद्याधरेण तस्य बालस्य मदनकुमार इति नाम कृतम्। क्रमेण गृहीतविद्यो बभूव। अन्यदाऽऽकाशे विमानारूढो व्रजन् गवाक्ष उपविष्टः पुत्रविरहेण कष्टितामात्ममातरं पश्यति। ततश्चातिस्नेहनिर्भरेण मदनकुमारेण सा निजजननी गृहीता, विमाने क्षिप्ता। ततो राज्ञी तं कुमारं पश्यन्ती तृप्तिं न याति, ततो राजपरिवारो जयसुन्दरीमपहृतां दृष्ट्वा उच्चैःस्वरमाक्रन्दति। हेमप्रभो राजाऽतिशूरोऽपि पादचारी किं करोति विद्याधरस्य। ततो राजा चिन्तयति—'मम क्षते क्षारसदृशं दुःखं जातम्। एकं पुत्रस्य मरणम्, द्वितीयं भार्याहरणम्' इति दुःखार्तो दिवसान् गमयति। इतश्च मदनकुमारो विद्याधरो राज्ञीं गृहीत्वा निजनगरस्योद्याने सरोवरपालौ सहकारच्छायायां यावत्तिष्ठति तावत्पूर्वभवस्य[1] स्नेहेन शुकीजीवेन देवलोकस्थितेनावधिज्ञानेन ज्ञात्वा निजमनसि चिन्तितम्—'अहो संसारस्वरूपम्! यन्मम भ्राता निजजननीं कलत्रबुद्ध्याऽपहरति, ततस्तं बोधयिष्यामि।' ततश्चैको वानर एका वानरी, एवं द्वे रूपे कृत्वा तस्मिन् सहकारवृक्षे समागतौ। ततो वानरो वानरीं प्रति प्राह—'भद्रे! एतत् कामुकतीर्थं कथ्यते। तिर्यञ्चोऽत्र पतिता मनुष्यत्वं लभन्ते। मनुष्योऽत्र पतितः कामुकतीर्थप्रभावेन देवत्वं प्राप्नोति। अस्मिन् विषये नास्ति सन्देहः।' ततोऽस्य सहकारस्य छायायां द्वौ मनुष्यावुपविष्टौ। तयोक्तम्—'तयो रूपं मनसि कृत्वाऽस्मिन् कुण्डे झम्पा दीयते, यथा त्वं मनुष्यो भवसि, अहं मानुषी भवामि।' ततो वानरेण भणितम्—'धिक् धिक्! एतस्य पुरुषस्य को नाम गृह्णाति येन निजमाता कलत्रबुद्ध्याऽपहृता,

१. पूर्वस्य for पूर्वं Z.

तस्य पापस्वरूपे आवयोः कोऽभिलाष' इति वानरवचनं श्रुत्वा द्वावपि विस्मितौ। विद्याधरश्चिन्तयति—'कथमहमस्याः पुत्रः?' राज्ञी चिन्तयति-'अयं विद्याधरः कथं मम पुत्रः?' द्वावपि यावदित्थं चिन्तयतस्तावद्विद्याधरेण वानरः पृष्टः। 'अहो महाभाग! कथमेतत् सत्यम्?' वानरेणोक्तम्-'सत्यमेव, अस्मिन् कार्ये नास्ति सन्देहः। यदि न मन्यसे ततोऽस्मिन् पर्वतनिकुञ्जे केवलज्ञानी मुनिः कायोत्सर्गे स्थितोऽस्ति तस्य पार्श्वे गत्वा पृच्छ' इति भणित्वा वानरयुगलमदृशीबभूव। सोऽपि विद्याधरकुमारो निजजननीसहितो निकुञ्जे केवलिनं पृच्छति—'भगवन्! वानरेण यदुक्तं तत्सत्यम्।' मुनिनोक्तम्—'सत्यमेव पुनरहं ध्यानविघ्नभयान्न कथयिष्यामि। हेमपुरे केवलज्ञानी सर्वं कथयिष्यति' इति श्रुत्वा मुनिं नमस्कृत्य गतो निजगृहे विद्याधरकुमारः। पूर्वजननीमेकान्ते मुक्त्वा द्वितीयजननीं प्रत्युक्तम्—'मातः! मम का जननी? को जनकः?' ततो विद्याधरी प्राह—'पुत्र! अहं तव जननी, एष विद्याधरस्तव पिता।' तेनोक्तम्—'मात एतत् सत्यम्। तथापि कारणेन पृच्छामि।' ततो विद्याधरी प्राह—'सत्यं परमार्थं तव पिता जानाति।' ततश्च तेन विद्याधरः पृष्टः। विद्याधरेण पटलीवृत्तान्तः कथितः। अतः सम्यक् तव पितरौ न जानामि। ततः कुमारेण भणितम्—'तात! यैषा नारी मयाऽऽनीता सा वानरेण केवलिना च मम जननी कथिता, ततोऽहं हेमपुरे गत्वा केवलिसमीपे सन्देहमपनेष्यामि।' इत्युक्त्वा जननीसहितो हेमपुरे गतः, तत्र केवली पृष्टः। इतश्च जयसुन्दरी बहुनारीमध्य उपविष्टा। हेमप्रभो राजा निजपरिवारपरिवृतो गुरुमुखात्पुण्यं शृणोति। इतश्चावसरं प्राप्य हेमप्रभेण राज्ञा केवली पृष्टः। 'भगवन्! सा मम भार्या जयसुन्दरी केनापहृता?' केवलिनोक्तम्—'राजन्! पुत्रेणापहृता।' ततो राज्ञा विस्मितहृदयेन पृष्टम्—'भगवन्! तस्याः पुत्रः कुतोऽस्ति? य एकः पुत्र आसीत् सोऽग्रेऽपि हतकृतान्तेन कवलीकृतः। द्वितीयः पुत्रो नास्ति। युष्माकं वचनमलीकं न सम्भवति।' ततश्च मुनिना राज्ञः संशयहरणार्थं कुलदेवीवृत्तान्तः कथितः। ततो निजं पितरं दृष्ट्वा सहर्षो बभूव। मदनकुमारो निजपितुर्मिलितः। अत्र महान् हर्षः। ततो जयसुन्दरी केवलिनं पृच्छति—'भगवन्! केन कर्मणा मम पुत्रवियोगो

बभूव । केवलिनोक्तम्—'पूर्वभवे शुकजन्मनि षोडश मुहूर्तानि यावदपहृतं सपत्न्यण्डकं ततोऽस्मिन् भवे षोडशवर्षाणि तव पुत्रविरहो बभूव । यतः—

जो दुक्खं सुखं वा तिलतुसमितुं च देइ अन्नस्स ।
सो वीयं वसुखित्ते परलोए बहुफलं लहइ ॥ ४ ॥

इति मुनिवचनं निशम्य पश्चात्तापोत्तापितशरीरा जयसुन्दरी राज्ञी रतिमहादेवीं क्षामयति । तयापि सा राज्ञी क्षामिता । इतश्च हेमप्रभो राजा केवलिनं पृच्छति—'भगवन् ! पूर्वभवे मया किं पुण्यं कृतं येनास्मिन् भवे[1] जयसुन्दरीसहितेनैवं विपुलं राज्यं प्राप्तम् ?' ततश्च केवलिनोक्तम्—'पूर्वभवे शुकजन्मनि युवाभ्यां पुत्रपत्नीसहिताभ्यां जिनेन्द्रस्याक्षतपूजा कृता । ततो मृत्वा देवलोके गतौ । ततश्च्युत्वा राज्यं प्राप्तम्' इति पूर्वभवं श्रुत्वा रतिपुत्रस्य राज्यं दत्त्वा जयसुन्दरीमदनकुमारसहितो राजा प्रव्रजितः । व्रतं चिरकालं पालयित्वा त्रयोऽपि मृत्वा सप्तमदेवलोके देवत्वेनोत्पन्नाः । ततश्च्युत्वा मानुष्यं प्राप्य सिद्धिं यास्यन्ति ।

इत्यक्षतपूजाविषये शुकयुग्मकथानकम् ॥

## गन्धपूजाविषये सुरराजकथा ।

पणमह तं नाभिसुयं सुरवइसंकंतलोयणसहस्सं ।
सकलंकं व विरायइ नहनिवहं जस्स पयजुयलं[2] ॥ १ ॥
वरगंधधूववुक्खुएहिं कुसुमेहिं पवरदीवेहिं ।
नेवज्जफलजलेहि य जिणपूयाणो गहा होइ ॥ २ ॥
अंगं गंधसुयंधं वन्नं रूवं सुहं व सोहग्गं ।
पांमइ परमपयंपिहु पुरिसो जिणणगंधपूयाए ॥ ३ ॥

यथा—

जाह जयसूरिनिवेणं जायासहिएण तइयजम्मंमि ।
संपत्तो निव्वाणं जिणंदमुणिगंधपूयाए ॥ ४ ॥

---

1. The portion beginning with मया and ending with भवे is missing in A. २. ०जयलं for ० जुयलं Z.

यथेति दृष्टान्तः । सूरनाम्ना राज्ञा कलत्रसहितेन जिनेन्द्रं गन्धपूजया परिपूज्य निर्वाणपदं सम्प्राप्तम् ॥

अत्रैव भरतक्षेत्रे वैताढ्यपर्वते गजपुरे नगरे विद्याधरस्वामी सूरराजा राज्यं करोति । तस्य श्रुतमती नाम भार्या । अन्यदा तस्य गर्भे देवलोकाच्च्युत्वा सम्यग्दृष्टिः कोऽपि देवोऽवततार । ततो गर्भानुभावेन दोहदोऽभूत् । अपूर्णदोहदा दिने दिने दुर्बलदेहा भवति । ततो राज्ञा पृष्टम्—'देवि ! किमेवं खिद्यसे ?' राज्ञी प्राह—'देव ! गर्भानुभावेनाष्टापदपर्वततीर्थे देवान् नमस्कर्तुं दोहद उत्पन्नः ।' इत्युक्ते सूरराजा राज्ञीसहितोऽष्टापदे जगाम । तत्र पटुपटहशंखभूरकाहलस्वरेण विधिनाम्नायविधिं कृत्वा राज्ञी हर्षितहृदया सुगन्धगन्धैर्जिनेन्द्राणां पूजां चकार । पूजां कृत्वा दोहदं पूरयित्वा राज्ञीसहितो राजा यावदुत्तरति[1] तावद्वनगहननिकुञ्जे दुस्सहो दुर्गन्धः समायाति । राज्ञी विस्मितहृदया राजानं पृच्छति—'स्वामिन्[2] ! कुसुमगन्धसमाकुलेऽस्मिन् वनेऽयं कस्य दुर्गन्धः ?' तेन भणितम्—'देवि ! अग्रेतनप्रदेशे ऊर्ध्वीकृतभुजं कायोत्सर्गे स्थितं महामुनिं किं न पश्यसि ? सूर्यकिरणतापित्वान्मलमलिनस्वेदक्लिन्नादस्य देहादयं दुर्गन्धः समायाति ।' राज्ञी प्राह—'स्वामिन् ! जिनधर्मो भव्य एव, परं तु प्रांशुकजलेन यदि स्नानं भवति ततो रम्यतर एव । तथाप्यस्या अङ्गं प्रांशुकजलेन प्रक्षाल्यतां यथा दुर्गन्धो याति ।' ततो निजप्रियाया आग्रहेण पद्मिनीपुटेन जलमानीय मुनेरङ्गं प्रक्षालितं विद्याधरेण । पश्चाद् द्वाभ्यामपि सुरभिचन्दनेन विलिप्तं तस्य मुनेः शरीरम् । तौ द्वावपि मुनिं नमस्कृत्यान्यतीर्थयात्रां कर्तुं गतौ विमानारूढौ । इतश्च सुरभिगन्धलुब्धेन भ्रमरसमूहेन पुष्पभरसमाकुलं वृत्तं[3] परित्यज्य तस्य मुनेः शरीरमधिष्ठितम् । मुनिरपि भ्रमराणामुपसर्गं सहते । इतश्च पक्षान्तरोद्भावे ? विद्याधरौ तीर्थानि नमस्कृत्य तस्मिन् मुनिप्रदेशे समागतौ । राज्ञी मुनिं न पश्यति । ततो विद्याधरं प्राह—'स्वामिन् ! अयं स एव मुनिप्रदेशः । ततोऽत्र मुनिः कथं न दृश्यते ?' यावद्विद्याधरो विलोकयति तावन्मुनिस्थाने कीलको दृष्टः । गगनाङ्गणा-

१. यावत्पर्वतादुत्तरति for यावदुत्तरति Z. २. स्वामिन् is missing in Z. ३. वृत्तं is supplied by the Editor.

दवतीर्य द्वावपि यावद्विलोकयतस्तावद् भ्रमरैः खाद्यमानो मुनिर्दृष्टः। द्वावपि दुःखिनौ जातौ। 'धिगावाम्। उपकारस्थानेऽपकारो विहितः।' ततो द्वावपि भ्रमरान् उड्डापयतः। ततश्चोपसर्गप्रान्ते घातिकर्मणि क्षीणे तस्य मुनेः केवलज्ञानमुत्पन्नम्। चतुर्विधदेवास्तत्र क्षणे केवलिमहिमानं कुर्वन्ति। ततश्च जयसूरो राजा प्रियासहितो मुनिं प्रति भणति—'मुनीश्वर! अस्माकमपराधं क्षमस्व।' ततो मुनिः प्राह—'निजमनसि खेदं मा कुरु, येन यत्कर्म कृतं निश्चितं स जीवस्तत्कर्मानुभवति, पुनर्मलमलिनं मुनिं दृष्ट्वा यो दुगंच्छां करोति स कर्मदोषेण भवे भवे दुगंच्छणीयो भवति। यतः—

मलमयपंकमयला धूलीमयला न ते नरा मयला।
जे पावपंकमयला ते मयला इह्ललोयंमि ॥ ५ ॥'

इदं वचनं श्रुत्वा भयभीता श्रुतमती राज्ञी प्राह—'भगवन्! मया पापया पूर्वं यूयं दुगंछिताः' इति। पुनः पुनर्मुनेश्चरणयोर्विलग्य मुनिं क्षामयति। मुनिनोक्तम्—'भद्रे! मा कुरु खेदम्। त्वयैवं क्षामयन्त्या सर्वमशुभकर्म ध्वंसितम्, परन्त्वेकभवयोग्यं कर्मानुभवसि।' तमेव ततश्च धर्मं श्रुत्वा प्रियासहितो जयसूरो राजा निजनगरे सम्प्राप्तः। ततश्च कियत्यपि गते काले द्वाभ्यां दीक्षा गृहीता। मृत्वा सौधर्मे उत्पन्नौ। आयुःक्षये देवलोकाच्च्युत्वा राजजीवः सुरपुरे नगरे सिंहध्वजनामा राजा बभूव। राज्ञीजीवो मदनावली नाम तस्य भार्या बभूव। पूर्वभवमोहात्सकलस्यान्तःपुरस्य मध्ये सा मदनावली राज्ञो वल्लभा जाता। इतश्च पूर्वभवे मुनिदुगंच्छणादशुभं कर्म बद्धम्, तस्य कर्मण उदयो बभूव[1]। स्थितसुभटैः रक्ष्यमाणा वनमध्ये राज्ञी मुक्ता। राज्ञी चिन्तयति—'अहो पुरा चीनं कर्म तावदेकाग्रमनसा मया सोढव्यम्।' यावदित्थं चिन्ता प्रवर्तते तावत्तस्य धवलगृहस्य समीपे एकस्मिन् सहकारवृक्षे शुकमिथुनं पश्यति। शुकी निजं भर्तारं प्रति प्राह—'स्वामिन्! किमप्यपूर्वं कथानकं ममाग्रे कथय।' मदनावली चिन्तयति—'अहमपि शृणोमि यथा दुःखविस्मरणं भवति।' शुकेनोक्तम्—'प्रिये! चरित्रमथवा कल्पितं किं कथयामि।' शुकी

१. The portion beginn[illegible] with राज्ञीजीवो and ending with उदयो बभूव is missi[illegible] A.

प्राह—'स्वामिन्! चरित्रं कथय'। ततो यथा जयसूरो नाम विद्याधरः, यथा श्रुतमती नाम तस्य भार्या, यथाऽष्टापदगमनम्, यथा मुनिगन्धपूजा, यथा देवलोकगमनम्, यथा सुरपुरनगरे च्यवनम्, यथा सिंहध्वजो राजा, यथा तस्य भार्या मदनावली, इत्येवमामूलचूलं मदनावलीचरित्रं तेन शुकेन कथितम्। राज्ञी चिन्तयति—'अयं पक्षी कथं मम भवत्रयं जानाति? भवतु साम्प्रतं यत्कथयति तच्छृणोमि।' शुकी पुनः प्राह—'स्वामिन्! साम्प्रतं सा मदनावली क वर्तते?' शुकः प्राह—'एषा तवाग्रे धवलगृह उपविष्टा दृश्यते।' पुनः शुकी प्राह—'स्वामिन्! अस्या राज्या रोगस्यास्ति कोऽपि प्रतीकारः?' शुकेनोक्तम्—'यत् पूर्वभवे मुनिदुगंच्छा विहिता, ततोऽस्मिन् भवे एषा दुर्गन्धा बभूव। यदि सप्त दिनानि यावत् सुगन्धद्रव्यैस्त्रिकालं जिनेन्द्रमर्चयति ततोऽस्माद् दुर्गन्धकष्टान्मुच्यते।' ततश्च मदनावली एवं श्रुत्वा तस्य शुकमिथुनस्य पुरो निजं सर्वाङ्गाभरणं प्रयच्छति। एवमुक्त्वा तच्छुकमिथुनं क्षणेनादर्शीबभूव। राज्ञी विस्मयापन्नहृदया चिन्तयति—'एष शुको मम वृत्तान्तं कथं वेत्ति? प्रस्तावे ज्ञानधरमुनिपार्श्वे शुकवृत्तान्तं पृच्छामि। साम्प्रतं तेन शुकेन यदुक्तं तत्करोमि। सुगन्धैर्जिनेन्द्रं पूजयामि।' एवं चिन्तयित्वा सप्त दिनानि जिनेन्द्रं पूजयित्वा[1] सप्तदिनप्रान्ते तस्य देहारोग्यं जातम्। दुर्गन्धो गतः। ततो रक्षपालपुरुषै राजा वर्धापितः—'देव! मदनावलीदेहाद् दुर्गन्धो गतः।' ततो हृष्टचित्तेन राज्ञा गजेन्द्र आरोप्य निजधवलगृह आनीता। ततो नगरमध्य उत्सवं कारयति। इतश्च तस्मिन् क्षणे मदनावलीसहितो राजा उद्यानपालपुरुषेणैवं विज्ञप्तः—'स्वामिन्! अद्योद्यानेऽमृततेजो मुनिः केवलज्ञानी समागतोऽस्ति।' अत्रान्तरे मदनावलीसहितो राजा मुनीन् वन्दितुं चचाल। मुनीन् नमस्कृत्य धर्मं शृणोति। इतश्चावसरं प्राप्य मदनावली मुनिं पृच्छति—'भगवन्! येनाहं दुःखे पतिता प्रतिबोधिता स कः शुकः?' सा केवलिना भणिता—'भद्रे! तव पूर्वभवभर्ता देवो देवलोकादागत्य शुकरूपं विधाय तव समीपे समागतः।' राज्ञी पुनः केवलिनं

1. The portion सप्त दिनानि जिनेन्द्रं पूजयित्वा is missing in A.

पृच्छति—'भगवन् अस्मिन् देवसमूहे स देवोऽस्ति किं वा न?' केवलिनोक्तम्—'मणिरत्नकुण्डलाभरणो यो देवस्तवाग्रे तिष्ठति अयं स देवः।' राज्ञ्या तं देवं प्रति भणितम्—'महाभाग! अहं दुःखे पतिता त्वया साधु प्रतिबोधिता, तवोपकारस्य बलिमानं किमुपकारं करोमि?' देवेनोक्तम्—'भद्रे! अहमद्य सप्तमे दिने देवलोकाच्च्युत्वा विद्याधरपुत्रो भविष्यामि। त्वयाऽहं तदा प्रतिबोधयितव्यः।' राज्ञा तत्तस्य वाक्यं प्रतिपन्नम्। 'यदि मम ज्ञानं भविष्यति तदा बोधयिष्यामि' इत्युक्त्वा देवः स्वस्थाने गतः। राज्ञी निजभर्तारं राजानं प्रति प्राह—'स्वामिन्! मयि मोहं त्यज! अहं केवलिसमीपे दीक्षां ग्रहीष्यामि।' राजा भणति—'देवि! प्रस्तावे आवां दीक्षां ग्रहीष्यावः।' ततो महाग्रहेण स्नेहपाशं छित्वा राज्ञी दीक्षां जग्राह। राजा श्रावकत्वं प्रतिपद्य निजगृहे समागतः। मदनावली तपस्तपति। इतश्च सप्तमे दिवसे स देवश्च्युत्वा विद्याधरपुत्रो बभूव। मृगाङ्क इति नाम कृतम्। क्रमेण यौवनारूढो बभूव। इतश्च मदनावली निजोपाश्रयद्वारे रात्रौ ध्याने स्थिताऽऽकाशे गच्छता विमानारूढेन तेन मृगाङ्ककुमारेण दृष्टा। ततो विमानादुत्तीर्यात्मीयऋद्धिं प्रकटयन् तां प्रति प्राह—'भद्रे! उग्रं तपः कथं तपसि? यदि भोगार्थं तपस्तपसि ततो मम वाक्यं शृणु—अहं विद्याधरपुत्रो मृगाङ्कनामा, रत्नमालायाः पाणिग्रहणनिमित्तं गच्छन्नस्मि, ततो मया त्वं दृष्टा। इदं विमानमारोहस्व। रत्नमालया मम किमपि नास्ति कार्यम्। मया सह विद्याधरसौख्यं परिभुङ्क्ष्व।' तस्यैवं भणतोऽप्यनेकचाटूनि जल्पमानस्यापि मदनावली निजसत्त्वान्न चलति। यथा यथाऽयं मदनविकारान् दर्शयति तथा तथा मदनावली शुभध्यानमारोहति। इत्थं तस्या उपसर्गं सहमानायाः केवलज्ञानमुत्पन्नम्। ततो देवैर्महिमा कृतः। ततो मदनावल्या तस्य मृगाङ्कनाम्नो विद्याधरस्य देशना दत्ता। ततो विद्याधरेण पृष्टम्—'स्वामिन्! त्वयि ममानुरागः कथम्?' ततो मदनावल्या तस्य भवत्रयं कथितम्। 'अतो मयि तव मोहः। अतः संसारकारणं मोहं परित्यज[1], धर्मविषये उद्यमं कुरु।' इति केवलिमुखात्पूर्वभवं श्रुत्वा विद्याधरो

1. परित्यज्य for परित्यज Z.

वैराग्यवान् दीक्षां जग्राह। तपस्तप्त्वा शिवं जगाम। मदनावल्यपि केवलिपर्यायान् पालयित्वा भव्यजीवान् प्रतिबोध्य मोक्षं जगाम।

इति गन्धपूजाविषये मदनावलीकथानकम् ॥

## नैवेद्यपूजाविषये हालिककथानकम्।

अह जो नेवज्जं जिणपुरउ भत्तिनिब्भरमणेण।
सो नरसुरशिवसुखं लहै नरो हलियपुरसु ब्व ॥
ढोवै बहुभत्तिजुउनेवज्जं जो जिणंदचंदाणं[1]।
भुंजई[2] सो वरभीए देवासुरमणुयनाहाणं ॥

अत्रैव भरते क्षेत्रे खेमा नाम्नी नगरी। तत्र सूरसेनो नाम राजा। इतश्च पूर्वं तस्य राज्ञो वंशे धन्या नाम्नी नगरी आसीत्। तस्यैव राज्ञो वंशे सिंहध्वजो नाम राजा बभूव। तस्या नगर्याः प्रवेशमार्ग एक उग्रतपा मुनिः कायोत्सर्गे स्थितः। ततश्च नगरीमध्ये प्रविशन् निर्दयो[3] लोकः 'अयमस्माकमपशकुनः' इति भणित्वोपसर्गं करोति। ततश्च तस्मिन् क्षणे तन्नगरनिवासी देवः कुपितो नगरलोकस्य। अत्रान्तरे घोरोपसर्गं सहमानस्य मुनेः केवलज्ञानमुत्पन्नम्। तत्कालमेव मरणं सञ्जातम्। ततो नगराधिष्ठातृदेवो नगरलोकं मारयिष्यामीति प्रतिजज्ञे[4]। राज्ञा महाभक्त्याऽऽराधितो देवः। ततो देवेनोक्तम्— 'राजन्! एतां नगरीमुद्वास्यान्यत्र नगरीं निवेशय यथा क्षेमं भवति।' ततोऽन्यत्र नगरी निवेशिता। क्षेमापुरीति नाम कृतम्। सोऽपि सम्यग्दृष्टिर्देवोऽरण्येऽपि ऋषभभुवने सिंहरूपेण परिवसति, दुष्टानां प्रवेशमपि न ददाति। इतश्चैको हालिकः श्रीऋषभमन्दिरस्याग्रे हलं खेटयति। क्षेमपुरनगरात्तस्य भार्या भक्तमानयति। एवं तस्य दिवसा व्रजन्ति। अन्यस्मिन् दिने तत्र ऋषभभुवने एकश्चारणो मुनिः समागतो जिनं नन्तुम्। तं दृष्ट्वा हालिकोऽपि तत्र समागतः। मुनिं नत्वा हालिकेनोक्तम्—'भगवन्! मनुष्यजन्मनि अहमेवं कथं दुःखी?' मुनिनोक्तम्—'पूर्वभवे त्वया मुनीनां दानं न दत्तम्। जिनाग्रे नैवेद्यं न दत्तम्। अतस्त्वं भोगरहितः।' इति श्रुत्वा तेन तस्य मुनेः साक्षं

1. जिणिंद for जिणंद Z. 2. भुंजे for भुंजइ Z. 3. निंदये A; निंदय Z. 4. इति प्रतिजज्ञे is supplied by the Editor.

नियमो गृहीतः—'भगवन् ! अद्यप्रभृति निजभोजनमध्याज्जिनपुरतः पिण्डीकृत्वा नैवेद्यमुपढौकयिष्यामि । यथाशक्त्या मुनीनामपि दानं दास्यामि ।' मुनिनोक्तम्—'वत्स ! नियमं गृहीत्वा मा प्रमादं कार्षीः' इत्युक्त्वा मुनिराकाश उत्पपात । स हालिकोऽपि प्रतिदिवसं भक्ते समागते जिनपुरतो नैवेद्यमुपढौकयति । अन्यदाऽतिक्षुधितस्य चिरकालाद् भक्तं समागतम् । भोजनायोपविष्टो यावत्कवलमुत्पाटयति तावन्नियमं स्मरति । ततश्च कवलं त्यक्त्वा नैवेद्यं गृहीत्वा यावज्जिनमन्दिरे याति तावद् दंष्ट्राविकरालमुखं महासिंहं पश्यति । ततो हालिकश्चिन्तयति—'नैवेद्यमदत्त्वा कथं भोजनं करोमि । तावदद्य मम जिनाग्रे जीवितमथवा मरणं भवतु पुनर्मयाऽवश्यं नैवेद्यं दातव्यमेव' इति सत्त्वमवलम्ब्य यथा यथा जिनभुवने याति तथा तथा सोऽपि सिंहः पश्चिमपदाभ्यामपसरति । तस्येदृक्सत्त्वेन परितुष्टो देव इति निश्चलचित्तो यावन्निजगृहे प्रविशति तावत्सिंहोऽदृश्यो बभूव । भक्तिभरनिर्भरो जिनवरेन्द्रस्य नैवेद्यं दत्त्वा निजस्थाने समागतो हालिकः । ततश्च स एव देवो भोजनसमये मुनिवेषेण तस्य हालिकस्य समीपे सत्त्वपरीक्षार्थं समागतः । यावद्धालिकः कवलमुत्क्षिपति तावदग्रे मुनिर्दृष्टः । यद् भक्तं भोजनार्थं सङ्गृहीतं तत्परितुष्टेन मुनये दत्तम् । अन्यद् भक्तं गृहीत्वा यावद् भोजनं करोति तावत्पुनरेको मुनिः समागतो वृद्धवेषेण । ततस्तस्यापि भक्तं दत्तम् । यावत्पुनर्भोजनं करोति तावत्क्षुल्लकवेषेण समागतो मुनिः । ततोऽवशिष्टं भक्तं तस्मै दत्तम् । एवं वारत्रयं मुनये भक्तं दत्तम् । ततोऽतिसत्त्वेन परितुष्टो देवः । प्रकटितं देवरूपम् । हालिकं प्रत्युक्तं देवेन—'भो भो जिनवरभक्तौ शुद्धभक्त्या तवाहं तुष्टः । ततः प्रार्थयस्व वरम् ।' हालिकेनोक्तम्—'स्वामिन् ! यदि मे परितुष्टोसि ततोऽमुष्मात् समूहान्मां विच्छोटय ।' देवेनोक्तम्—'एवं भवतु ।' इति भणित्वा गतो निजस्थाने देवः । हालिकेन सर्वं देवदर्शनं प्रियाग्रे निवेदितम् । तयोक्तम्—'स्वामिन् ! त्वं धन्योसि येन शुद्धभक्त्या जिनवरेन्द्र आराधितः ।' तयैवमनुमोदनं कुर्वत्या पुण्यमर्जितम् । इतश्च क्षेमपुरीनगर्यां सूरसेनराज्ञः पुत्री विष्णुश्रीरत्यन्तरूपपात्रं वर्तते । राजा तस्याः पुत्र्या योग्यं वरमलभमानः स्वयम्वरं कारयति । ततश्च सर्वे

राजपुत्रा आकारिताः। स्वयम्वरदिवसे सर्वे राजानः कृतशृङ्गारा मञ्चेष्वारूढाः। ततो विष्णुश्रीः सर्वाङ्गाभरणा स्वयम्वरमध्ये समागता। इतश्च सोऽपि हालिकस्तं स्वयम्वरं श्रुत्वा विलोकयितुं समागतः। क्रमेण प्रतीहारी सर्वेषां राज्ञां वंशान् वर्णयित्वा विष्णुश्रीसहिता स्वयंवरद्वारे समागता। हलमारूढो हालिको दृष्टः। कृतसुरसान्निध्यया कन्यया सर्वान् राजपुत्रान् मुक्त्वा हालिको वृतः। ततश्च तस्याः पितरौ दुःखिनौ जातौ—'धिगस्मान् यदस्मत्पुत्र्या हालिको वृतः।' इति। ततश्च सर्वे राजानः सकोपा जाताः—'अस्मासु विद्यमानेष्वनया हालिकः परिवृतः। ततोऽस्याः पुत्र्या अस्य हालिकस्य च न दूषणम्, एतत् सूरसेनराज्ञः पुत्रीपितुर्दूषणम्—अस्मान् आकार्य हालिकाय कन्या प्रदत्ता। तदेनं हालिकं व्यापाद्यैनां ग्रहीष्यामः।' एवमुक्त्वा सर्वे राजानो हालिकं प्रति दधाविरे। हालिकोऽपि देवताबलेन तैः सर्वैः सह युद्धं करोति। हालिकेन समं सर्वेऽपि राजानो युद्धं कुर्वन्ति। ततश्च हालिको हलमुत्पाट्य करिकुम्भान् भिनत्ति, तुरङ्गमघटा निहन्ति, रथान्[1] भूरयति। ततश्च सर्वे राजानो विस्मिताः। परस्परमित्थं कथयन्ति—'एष किं देवः? किं वा विद्याधरः? किं वा कोऽपि सिद्धपुरुषः? यदेवं बलं दृश्यते। यावदयं सर्वेषां संहारं करोति तावदुपशामं नीयते।' एवमुक्त्वा चण्डसिंहप्रमुखाः सर्वे राजानो मिलित्वा हालिकं क्षामयन्ति—'देव! यदस्माभिरशुभं कृतं तत्क्षन्तव्यम्।' ततश्च[2] तस्यैवंविधं चेष्टितं विलोक्य जननीजनकाभ्यां महोत्सवेन विवाहं कृत्वा हालिकः परिणायितः। ततः सर्वे राजानो मानं दत्त्वा विसर्जिताः। हालिकोऽपि विष्णुश्रिया सह राज्यसौख्यान्यनुभवति। अन्यदा स एव देवः प्रत्यक्षीबभूव। हालिकं प्रत्युक्तम्—'महाभाग! अन्यदपि यत्किञ्चित्प्रार्थयसि तत् ते त्वरितं ददामि।' हालिकेनोक्तम्—'स्वामिन्! यद्येवं तत् त्वया या नगरी उद्वसीकृता सा वसतु तव प्रसादात्।' देवेनोक्तम्—'भवत्वेवम्।' ततः सा नगरी वासिता। विष्णुश्रीसहितो हालिकराजा नवनवान् विलासान् करोति। श्रीजिनेन्द्राणां नैवेद्यपुण्ययोगेनेह लोकेऽपि राज्यं प्राप्तम्। ततो नैवेद्यफलं ज्ञात्वा द्वाभ्यां प्रियाभ्यां सह प्रतिदिवसं जिनपुरतो नैवेद्य-

१. रथान् is missing in A. २. तत् for ततश्च A.

मुपढौकयति। एवं सुखावगाढस्य दोगुण्डिकदेववत् तस्य दिवसा व्रजन्ति। इतश्च स एव देव आयुःक्षये च्युत्वा विष्णुश्रीगर्भे उत्पन्नः। सम्पूर्णे दिवसे पुत्रजन्म। कुमुद इति नाम कृतम्। क्रमेण यौवनवयो बभूव। स्नेहेन हलराज्ञो वल्लभो बभूव। कियत्यपि गते काले तस्य पुत्रस्य राज्यं दत्त्वा व्रतं जग्राह। नैवेद्यपुण्यफलेन मृत्वा प्रथमदेवलोके देवो बभूव। अवधिज्ञानेन चिन्तयति—'पूर्वभवे मया किं पुण्यं कृतं येन मयैषा ऋद्धिः प्राप्ता?' ततो 'नैवेद्यपुण्यफलेनेदृशी सम्पत् मम सञ्जाता' इति चिन्तयति। आत्मभावचरित्रं ज्ञात्वा निजपुत्रप्रतिबोधनार्थं प्रतिदिवसं समायाति। रजनीपाश्चात्यप्रहरे एवं भणति—'राजन्! एकाग्रचित्तेन मम वचनं शृणु—'यन्मया पूर्वभवे महाभक्त्या जिनवरस्य नैवेद्यं दत्तं तेन ममैषा ऋद्धिः सञ्जाता, परं तव प्रसादाज्जिनवरधर्माच्च एषा ऋद्धिः सञ्जाता। ततस्त्वमपि जिनवरधर्मं कुरु। अहं तव पिता जिननैवेद्यफलेन देवलोके देवो जातः। पूर्वभवमोहेन तव बोधनार्थं समागतः। अतस्तवापि जिनधर्मः शरणम्' इति पुत्रं प्रतिबोध्य देवलोके देवः सम्प्राप्तः। जिननैवेद्यफलेन सुरनरसौख्यान्यनुभूय सप्तमे भवे मोक्षं यास्यंति॥

इति श्रीनैवेद्यपूजाविषये हालिककथानकम्॥

## दीपपूजाविषये दीपशिखकथा।

दाऊण दीवयं जो जिणस्स[1] पुरउ पराई[2] भत्तीए।
पत्तामुखं अक्खेमि गंधभद्दाइत्तीएँ॥ १॥[3]

अत्र भरते श्वेताम्बिका नाम नगरी। तत्र विजयवर्मा नाम राजा। गन्धभद्रा नाम[4] कर्मकरी। अन्यदा तया जिनस्य दीपपूजापुण्यफलं श्रुतम्। यतः—

चंगं[5] अंगं सुद्धा बुद्धी अवलक्खयाइं अक्खाइं।
सव्वुत्तमं पहुत्तं जिणंददीवयपयाणफलं॥ २॥

इति श्रुत्वा तस्याः श्रद्धा बभूव। ततो न्यायोपार्जितेन दीप-

१. जिणंदस्य for जिणस्स A. २. पराय for पराइ Z. ३. After this line Z. adds 'तस्या गन्धभद्राया आख्यानं चारित्रं अक्खेमि कथयाम कहं', ४, राजा। गन्धभद्रा नाम is missing in A. ५. वंगे for चंगं A.

समये जिनमन्दिरे प्रदीपो दत्तः। आयुःक्षये मृत्वा तस्यामेव नगर्यां विजयवर्मणो राज्ञो जयाभार्योदरे उत्पन्नो जीवः। तस्मिन् क्षणे राज्ञी स्वप्ने मुखे प्रविशन्तं ज्वलन्तमग्निं पश्यति। प्रभाते राज्ञोऽग्रे विज्ञप्तम्। राज्ञा कथितम्—'देवि ! उत्तमः कोऽपि पुत्रो भविष्यति।' ततश्च तृतीये मासे दोहदो जातः। देवी इति जानाति यदहं देवान् गुरूंश्च पूजयामि। दीनानां दुःस्थितानां दानं ददामि। राज्ञा पूरितो दोहदः। सम्पूर्णेषु दिवसेषु[1] पुत्रो जातः। वर्धापनकं जातम्। दीपशिख इति नाम कृतम्। सहजेनापि तस्य ललाटे दीपशिखासदृशेन रक्ततिलकेन सर्वस्य जनस्य चित्ते विस्मयो बभूव। इतश्च कान्तिपुरे विक्रमसेनो नाम राजा। तस्य गन्धर्वदत्ता नाम पुत्री। सा वीणावादनकलागर्विताऽऽत्मानमेव मन्यते ! एवञ्च कथयति—'यः कोऽपि वीणावादनकलया मां जेष्यति अहं तं भर्तारमङ्गीकरोमि।' ततो राज्ञा स्वयम्वरमण्डपो रचितः। सर्वे राजपुत्रा आकारिताः। दीपशिखोऽपि यौवनाधिरूढस्तस्मिन् स्वयंवरे समागतः। सर्वेषु राजकुमारेषु मञ्चेषूपविष्टेषु गन्धर्वदत्ता स्वयंवरमध्ये समागता। तां दृष्ट्वा दीपशिखेन चिन्तितम्—'अहो विधेर्विनिर्माणविज्ञानम्।' गन्धर्वदत्तया दीपशिखकुमारो दृष्टः। ततो गन्धर्वदत्ता चिन्तयति—'अहो वीणाविनोदविज्ञानवर्जितोप्येष पुरुषः पुरुषरत्नम्, तावन्मयाऽयमेव परिणेतव्यः।' तदा सा कुमारी दीपशिखं दृष्ट्वा तन्मया बभूव। इतश्च जालन्धरपुरुषेण स्वयंवरमध्ये एवमुक्तम्—भो भो ! राजकुमार ! अनया राजपुत्र्या इयं प्रतिज्ञा कृताऽस्ति—'एतेषां कुमाराणां मध्ये यः कोऽपि वीणाकलायां ममाधिकोऽस्ति स मम प्रियः।' ततो यूयं निजनिजवीणाविज्ञानं प्रकटीकुरुत।' तत एवं श्रुत्वा एकेन गर्वितेन राजकुमारेण वीणा वादिता। आसन्ने एको मत्तगजेन्द्रः स्थापितः। वीणां वादयताऽनेन राजकुमारेण स्तम्भितो गजः। ततो राजकन्यया चिन्तितम्—'एतेऽपि राजपुत्रा अतीव कलाकुशला दृश्यन्ते। ततो मया यः पूर्वं दृष्टः कुमारः अहं यदि तमेव शृणोमि ततोऽभग्नप्रतिज्ञा भवामि।' ततोऽन्येन राजकुमारेण वीणा गृहीता। वन्ध्यवृक्षः स्थापितः, वीणां वादयित्वा फुल्लावितो वृक्षः।

1. दिवसेषु is missing in A.

ततोऽन्येन गृहीता वीणा। मधुरस्वरं वादयित्वा दूरस्थो मृग आकृष्टः। ततोऽन्येन गृहीता वीणा। प्रत्यासन्नो गजः स्थापितः। दत्तो भिष्टान्नस्य कवलो गजस्य। वीणां वादयित्वाऽर्धभक्षं कवलं त्याजितो गज इत्यादीनि बहूनि वीणाविज्ञानकौतुकानि दर्शितानि सर्वैः कुमारैः। ततो गन्धर्वदत्तया वीणा गृहीता, वादिता मधुरस्वरम्। ततो दूरादपि मत्तगजेन्द्रः स्वरेण मूले समागतः। मृगो दूरादपि समागतः। आमूलं फुल्लावितो वन्ध्यवृक्षः। मूलादपि कवलं त्याजितो गजः। सर्वेऽपि राजकुमारा विस्मिताः। परस्परमेवं चिन्तयन्ति—'यद् दुष्प्रापा एषा राजकुमारी। इतश्च दीपशिखस्य वीणाऽर्पिता। वादिता दीपशिखेन वीणा। सर्वोऽपि लोको वीणां श्रोतुमुत्कण्ठितो बभूव। अनेन तथा वीणा वादिता यथा स्वयम्वरमध्ये सर्वोऽपि लोकः सुप्तः। तं सर्वं सुप्तं दृष्ट्वा दीपशिखकुमारेण राजपुत्रीहस्तान्मुद्रिका गृहीता। विक्रमसेनराजहस्तात्सुवर्णकटकं गृहीतम्। अन्येषामपि सर्वेषामाभरणानि गृहीतानि। स्वयंवरमध्ये कृत आभरणराशिः, क्षणान्तरे जजागार राजलोकः। आभरणराशिर्दृष्टः। विस्मितचित्तेन राजलोकेन भणितम्—'अहो! अपूर्वमस्य वीणावादनविज्ञानम्!' परितुष्टया गन्धर्वदत्तया तस्य कण्ठे वरमाला क्षिप्ता। विस्तरेण कृतं पाणिग्रहणम्। कियत्कालं तत्र स्थित्वा गन्धर्वदत्तासहितश्चलितो निजदेशं प्रति कुमारः। मार्गे गच्छन् प्रतिष्ठानपुरे समागतः। तत्रोद्याने परिसर आवासितः। इतश्च तस्य पुरस्य स्वामिनः कर्कराजस्य पुत्री लीलावती नाम्नी सर्पेण दष्टा मृतेति भणित्वा चितां प्रति निस्सार्यते। दीपशिखकुमारेण वाहित्रशब्दः श्रुतः। भणिता गन्धर्वदत्ता—'प्रिये! जीवन् मानुष्यं निस्सार्यते।' तया भणितम्—'कथं जानासि स्वामिन्?' तेनोक्तम्—'प्रिये स्वरविशेषादहं जानामि।' तयोक्तम्—'स्वरविशेषेण कथं ज्ञायते?' तेनोक्तम्—'मन्त्रबलेन सर्वं ज्ञायते।' तयोक्तम्—'यद्येवं ततो जीवापय तन्मृतकम्।' ततो निजपुरुषः प्रहितः। स्थापितो मृतकः। लिम्पायिताश्चितासमीपे। एवं कृते पश्चात्कुमारो गतः। दृष्टः कर्केण राज्ञा। तं कुमारं दृष्ट्वा विस्मितो राजा। अवश्यं जीवापिता लीलावतीति चिन्तयति। कृतः शिखाबन्धो

१. मृगो दूरादपि समागतः is missing in A.

दीपशिखकुमारेण। लिप्तभूमौ मोचिता लीलावती। कुमारेण मन्त्रं स्मृत्वेति भणिता कुमारी—'उत्तिष्ठ, मुखशौचं देहि मे।' गृहीतस्वर्ण-करिकोत्थिता लीलावती। सर्वोऽपि हृष्टो लोकः। जातं वर्धापनकम्। कर्केण राज्ञा विजयधर्मपुत्रं ज्ञात्वा दीपशिखाय दत्ता लीलावती कन्या। विवाहो बभूव। ततश्च कियन्ति दिनानि तत्र स्थित्वा पुनः स्वदेशे चलितः। मार्गे गच्छन् क्रमेणोज्जयिनीं प्राप्तः। दैवयोगेन तत्रावासितः। इतश्च सन्ध्यासमये जाज्वल्यमानां चितां पश्यति कुमारः। तत्र गतो निशासमये भार्याया अग्रेऽकथयित्वा। खड्गहस्तो गतश्चितासमीपे। यावदेकस्य वृक्षस्य मूले स्थितोऽस्ति तावत्समागतो विद्यासाधकः पुमान्। तेन मण्डलमालिख्य मन्त्रस्वरेण डमरको वादितः। मण्डल-मध्ये एका कन्यका निवेशिता। विद्यासाधकेन कन्यैवं भणिता—'अरे! इष्टदेवं स्मर। समागतोऽवसानकालस्तव।' यावत्क्षुरिकामा-कृष्यैवं कन्यां भाययति तावत्कन्यकाऽऽक्रन्दितुं प्रवृत्ता। ततो जाता-नुकम्पो दीपशिखः[1] कुमारः। एवं कन्याविलापं श्रुत्वा कोशात् खड्गमाकृष्य 'मा बिभेहि[2]' कन्यां प्रत्येवं भणति। विद्यासाधकपुरु-षोऽग्रे बभूव। उक्तश्च—'रे रे दुराचार! पुरुषाधम! इमामबलां मारयन् किं न लज्जितः? अनेन खड्गेन तव शिरोऽपनेष्यामि' इति वीरवचनं श्रुत्वा भयकम्पमानसर्वाङ्गो विस्मृतमन्त्रस्मरणो विद्या-साधको बभूव। साधकेन भणितं कुमारं प्रति—'महाभाग! मम विद्यासाधनार्थमुद्यतस्य विघ्नं कर्तुं तव न युक्तम्। अहं भारिभूतिनामा विद्यासाधकः। मया स्त्रीरत्नाकर्षणस्य मन्त्रस्य साधनं प्रारब्धम्। द्वादशमासान् सेवा कृता। ततोऽद्य प्रधानदिवसे मन्त्रबलेनैषा राज-कन्याऽऽनीता होमनिमित्तम्। ततो विघ्नं मा कुरु।' इतश्च दीपशिख-कुमारेण भणितम्—'भो महाभाग! अनुचितः स्त्रीवध उत्तम-पुरुषस्य। ततोऽत्यन्तपापहेतुना स्त्रीवधेन पर्याप्तम्। त्वं तु मनो-हराकृतिर्दृश्यसे। अतस्तवानुचितोऽयं स्त्रीवधः।' ततो लज्जितो विद्यासाधकपुरुषः कुमारं प्रति भणति—'भो महानुभाव! साधु प्रतिबोधितस्त्वयाऽहं महापापात्मा। ततो मयैतत् पापकर्म परित्यक्तम्। अतः साम्प्रतं गच्छामि स्वस्थानम्। त्वयैषाऽवन्तिनी

१. दीपशिष्यः for दीपशिखः Z. २. बिभ्यसु for बिभेहि MSS.

नाम्नी कन्याऽवन्तिवर्धनस्य राज्ञः समर्पणीया।' कुमारेण भणितम्—'एवं करिष्यामि।' एवमुक्त्वा गतो विद्यासाधकः स्वस्थाने। दीपशिखकुमारोऽपि कन्यासहितो निजावासे गतः। कथितो वृत्तान्तः स्वकलत्रयोः। प्रभातेऽवन्तिवर्धनस्य समर्पिता पुत्री। यथावृत्तं कथितं राज्ञोऽग्रे। परितुष्टोऽवन्तिवर्धनो राजा। तस्मै दीपशिखाय दत्ता पुत्री। विवाहोत्सवो बभूव। कियन्तं कालं स्थित्वा क्रमेण पुनर्निजदेशं प्रति चलितः। मार्गे गच्छन् पद्मावत्यां नगर्यां समागतः। नगरीबाह्योद्यान आवासितः। ज्ञातवृत्तान्तेन तन्नगरीस्वामिना मञ्जराज्ञा महोत्सवेन नगरीं प्रवेशितः कुमारः। इतश्च तस्य राज्ञः सभायां परस्परमीदृशः संवादो बभूव। मञ्जराज्ञोक्तम्—'देवता मनुष्यगात्रे[1]ऽवतीर्य किञ्चित्स्फुटं न जल्पन्ति।' दीपशिखेन भणितम्—'स्वामिन्! एवं मा भण। एतत् सर्वं घटते।' पुना राज्ञोक्तम्—'मनुष्यशरीरेऽमानुषं कथमवतरति?' दीपशिखेनोक्तम्—'यदि तव कौतुकं ततोऽहमेवैवं करोमि।' ततो राज्ञा कामलता नाम्नी निजपुत्री आनायिता। दीपशिखकुमारेण[2] स्मृतो मन्त्रो निजहृदये। आकारितो हनूमान् महावीरः। तावद् वाताहतपत्रमिव पात्रं घूर्णयति, न च जल्पति। ततो दीपशिखकुमारेण गाढं मन्त्रस्मरणं विहितम्। ततश्च वक्तुं प्रवृत्तं पात्रम्। दीपशिखेन भणितम्। 'तावदपरं प्रष्टव्यमस्तु। कथमत्र कालविलम्बो बभूव।' दीपशिखेनोक्तम्—'प्रथमं भव्यपात्रं विलोक्यते, अक्षीणपञ्चेन्द्रियैः सहितम्, यत्परेषामिन्द्रियैर्वक्तव्यम्। अतोऽहं हिमाचले गत्वा तत्र दिव्यौषधीरानीयात्रागता। एतत्कालविलम्बकारणम्।' अन्यदपि पद्मावतीपुरीस्वामिना पृष्टम्। तत् सर्वं कथितं देव्याः। ततः परितुष्टो राजा दीपशिखो देवतां विसर्जयति। तत्प्रभृति कामलता राजपुत्री सरस्वतीव संलपति। ततो दत्ता दीपशिखकुमाराय कामलता। कियन्ति दिनानि तत्र स्थित्वा भार्याचतुष्टयसहितः श्वेताम्बिकां नगरीं प्राप्तः। तत्र निजपितुर्मिलितः। कृतं वर्धापनकम्। विजयवर्मराज्ञा दीपशिखं राज्ये निवेश्य दीक्षा गृहीता। दीपशिखो राज्यं करोति। अन्यदैवं चिन्तयति—'पूर्वभवे

---

१. मात्रे for गात्रे Z. २. Z. adds आनायिता। मण्डलमध्ये निवेशिता after दीपशिखकुमारेण.

मया किं पुण्यं कृतं येनेदृशं सौख्यं मम सञ्जातम्' इतीहापोहं कुर्वतस्तस्योत्पन्नं जातिस्मरणम्। ततो दीपपूजाफलं दृष्टम्, विशेषतो धर्मं करोति ॥

इति दीपपूजायां दीपशिखकथा ॥

## दानविषये कुरुचन्द्रकथा।

साहारणञ्छदाणे बहुण साहारणं फलं होइ।
तत्थय कुरुचंदस्स व्व उत्तमफलसोहगो भावो ॥ १ ॥

जम्बूद्वीपे अत्रैव भरते गजपुरं नाम नगरम्। तत्र कुरुचन्द्रो नाम राजा। इतश्चान्यदा श्रीशान्तिनाथः समवसृतो गजपुरोद्याने। राजा महाविभूत्या श्रीशान्तिनाथं वन्दितुं जगाम। स्वामिनं प्रणम्य धर्मं शृणोति राजा। प्रस्तावं प्राप्य पृष्टो जिनः—'स्वामिन्! केन पुण्येन मयैवंविधं राज्यं प्राप्तम्। अन्यच्च केन कर्मणा वस्त्रफलप्रमुखानि पञ्च पञ्च वस्तूनि प्रतिदिवसं दोयनिकायां[1] सम्पद्यन्ते। तानि भणित्वाऽऽत्मना नोपभुञ्जामि[2], अन्यस्य कस्यापि न ददामि। एतत्सर्वं ममाग्रे समादिश, स्वामिन्!' भगवान् प्राह—'राजन् साधुदानात्त्वया राज्यं प्राप्तम्। यथा पुण्यफलेन प्राप्तं तत्पुण्यं शृणु—

'अत्रैव भरते श्रीपुरं नाम नगरम्। तत्र परस्परं प्रीतिमन्तश्चत्वारो वणिजो वसन्ति। ते चामीभिर्नामभिर्विख्याताः सुधनधनपतिधनेश्वरधनदाः। चत्वारोऽप्यर्थोपार्जनाय रत्नद्वीपं प्रति चलिताः। तेषां चतुर्णां द्रोणको नाम कर्मकरः[3] संबलवाहको[4] वर्तते। अन्यदा तैस्सर्वैर्वनमध्ये प्रतिमया स्थितो महामुनिर्दृष्टः। चिन्तितश्च—'अहो! अस्माकं पुण्यमुपस्थितं यदयमुपशमराशिरिव मुनिर्दृष्टिगोचरं गतः। तदेतस्मै मुनये किञ्चिद्दत्त्वाऽऽत्मानमनुगृह्णीमो वयम्। मुनेरपि गोचरसमयो बभूव। ततस्तैश्चतुर्भिर्द्रोणक एवं भणितः—'भो भद्र द्रोणक! देह्यस्मै मुनये किञ्चित्।' ततस्तेभ्योऽधिकश्रद्धया प्रतिलाभितो मुनिः। तेन द्रोणकेन बद्धं महापुण्यफलं कर्म। ततस्तेन रत्नद्वीपं प्राप्ताः। तत्रार्थमुपार्जयित्वाऽऽगताः स्वदेशम्। तेनैव पुण्य-

१. ढोयनिकायां for दोयनिकायां A. २. नोपभुजानि for नोपभुञ्जामि Z. ३. कर्म is missing in Z. ४. संबल॰ for सबल Z.

बीजेन सर्वदापि ते ऋद्धिमन्तो जाताः। किन्तु धनपतिधनेश्वरावतीव मायाविनौ वर्तेते, सुधनधनदाभ्यां सह सूक्ष्ममायया व्यवहारं कुरुतः। द्रोणकोप्यत्यन्तनिर्मलचित्तः, आयुःक्षये मृत्वा गजपुरे नगरे दुष्प्रसहस्य राज्ञः श्रीसुन्दरीकुक्षौ चन्द्रस्वप्नेन त्वं कुरुचन्द्रो बभूव। अत्रान्तरे सुधनधनदौ मृत्वा समुत्पन्नौ पृथक् पृथग् वणिग्पुत्रौ। एकः काम्पिल्यपुरे द्वितीयः कार्तिकपुरे। एकस्य वसन्तदेव इति नाम, अन्यस्य कामपाल इति नाम। तावपि मायाविनौ धनपतिधनेश्वरौ आयुःक्षये मृत्वा मायाप्रभावेन स्त्रीत्व उत्पन्नौ, एका शंखपुरे, अन्या जयन्त्याम्। एकस्या मयन्तेति नाम, द्वितीयस्याः केसरेति नाम। क्रमेण सर्वेऽपि यौवनं प्राप्ताः। इतश्चान्यदा काम्पिल्यपुराद् वसन्तदेवोऽर्थोपार्जनाय जयन्त्यां गतः। तत्राष्टमीचन्द्रमहोत्सवे रतिनन्दनोद्याने केसरा दृष्टा, तयापि सः। वसन्तदेवेन जयन्तीवास्तव्यः पुरुषः पृष्टः—'एषा का नारी?' ततश्च सञ्जातमित्रभावः प्रियङ्करो नाम वणिक्पुत्रः प्राह—'अहो मित्र! पञ्चनन्दिनः श्रेष्ठिनः पुत्री केसरी नाम, जयन्तदेवस्य भगिनी।' ततो वसन्तदेवो जयन्तदेवेन सह मैत्रीं करोति। अन्यदा जयन्तदेवेन वसन्तदेवो भोजनाय निजगृहे निमन्त्रितः। ततो वसन्तदेवेन दृष्टाऽत्यन्तरूपवती केसरी। इतश्च जयन्तदेवस्य हस्ताद् वसन्तदेवः कुसुमानि गृह्णाति। ततश्च प्रियङ्करा नाम्नी तस्याः केसराया धात्री तच्छुभं शकुनं विचारयति। ततः केसरीं प्रति प्रियङ्करा प्राह—'देवि केसरे! अस्य वसन्तदेवस्य कामपि प्रतिपत्तिं कर्तुं तवापि युक्तम्।' तयोक्तम्—'तव यद् रोचते तत् कुरु।' ततो निजगृहोद्याने गतस्य वसन्तदेवस्य प्रियङ्गुमञ्जरीकक्कोलफलानि समर्पयन्ती प्रियङ्करा प्राह—'सुन्दरस्वहस्तारोपितवृक्षसमुत्पन्नानीष्टानीमानि केसरया मम स्वामिन्या तत् प्रेषितानि।' ततो हर्षितेन वसन्तदेवेन तस्या भावं ज्ञात्वा प्रियङ्करैवमुक्ता—'भद्रे त्वया साधु कृतम्, इत्थमन्यदपि यत्तव योग्यं तत्कर्तव्यम्?' ततो गत्वा केसर्यग्रे एवं सर्वं कथितं प्रियङ्करया। केसरा परितुष्टा जाता। इतश्च रजनीपश्चिमप्रहरे केसरया स्वप्नो लब्धः—किलाहं वसन्तदेवेन परि-

1. The portion beginning with •अहो• and ending with •स्वहस्ता• is missing in. A.

णीता। वसन्तदेवेनापि स्वप्नो दृष्टो यत् केसरया सह परिणयनं कृतम्। प्रभाते तुष्टचित्तया केसरया प्रियङ्कराऽग्रे स्वप्नः कथितः। अत्रान्तरे पुरोहितेनोक्तम्—'एवं भविष्यति।' इति पुरोहितवचनं श्रुत्वा द्वे अपि हृष्टे जाते। प्रियङ्करा प्राह केसरां प्रति—'सर्वथा वसन्तदेवस्तव भर्ता भविष्यति। केसरया शकुनग्रन्थिर्बद्धा। प्रियङ्करया वसन्तदेवस्याग्रे केसरास्वप्नवृत्तान्तः कथितः। वसन्तदेवेनाऽऽत्मस्वप्नः कथितः। स्वप्न-संवादात्सिद्धं कार्यं मन्यमानः प्रमोदं गतो वसन्तदेवः। एवं प्रतिदिवसं प्रवर्धमानानुरागयोस्तयोर्गतः कियान् कालः। इतश्चान्यदा निजगृहे स्थितेन वसन्तदेवेन पञ्चनन्दिश्रेष्ठिगृहे[1] मङ्गलतूर्यशब्दः श्रुतः। 'अहो किमेतत्?' ततश्चैकया कर्मकर्योक्तम्—'यतोऽद्य केसरा कान्यकुब्ज-वास्तव्यसुदत्तश्रेष्ठिपुत्राय वरदत्ताय दत्ता तन्निमित्तमेतद् वर्धापनकम्।' एवं श्रुत्वा मूर्च्छितो वसन्तदेवः। अत्रान्तरे आगता प्रियङ्करा, तयाऽऽश्वासितो वसन्तदेवः, भणितश्च—'अहं केसरया प्रेषिता, तया इति सन्दिष्टम्—'त्वया खेदो न कर्तव्यः। एतैर्मम मातृपितृबान्धवैर्मम चित्तमजानद्भिरेतत्सर्वं प्रारब्धम्। सर्वथा मम त्वमेव भर्ता। त्वां विनाऽन्यथा मया मर्तव्यम्।' एवं श्रुत्वा परितुष्टो वसन्तदेवः। भग्ना मूर्च्छा। ततो वसन्तदेवेन भणिता प्रियङ्करा—'भद्रे! अस्मिन् व्यति-करे ममाप्येष निश्चयः।' प्रियङ्करया गत्वा कथितं केसराग्रे। सा पुन-र्जाता। तयोर्विवाहोपायं चिन्तयतोर्गता बहवो दिवसाः। इतश्च जन्य-यात्रा समागता। ततो वसन्तदेवश्चिन्तयति–'प्रभाते विवाहो भविष्यति' इति श्रुत्वा दुःखमना नगरान्निर्गत्य वनमध्ये गतश्चिन्तयति—'अहो विधेर्विलसितम्। सा कन्या मम परिणयने कृतप्रतिज्ञा मातृपितृभि-रन्यस्मै दीयमाना मरणं करिष्यति, ततोऽहं यावत्तस्या मृत्युं न शृणोमि तावत्प्रथमं प्राणत्यागं करोमि' इति विचिन्त्याशोकवृक्षस्य शाखायां पाशं बद्ध्वा यावदात्मा बद्धो वसन्तदेवेन तावद्बन्धुरिव वनगह्वरात्समागतः पुमानेकः। तेनोक्तम्—'अहो महाभाग! एवं साहसं मा कुरु', इति कथयित्वा पाशः छेदितः। किङ्किणीवृक्षतले तमानयति। द्वावप्युपविष्टौ। पुरुषो भणति—'अहो महाभाग! किमेवमुत्तमजनविरुद्धमारब्धम्।' ततो वसन्तदेवो निजवृत्तान्तं

1. ॰दिनश्रेष्ठ॰ for ॰नन्दिश्रेष्ठि॰ *Z*.

कथयति। अथ पुरुषः प्राह—'यद्यप्येवं तथापि तव विवेकिनो न युज्यते एवं कर्तुम्। अत्र कोप्युपायो योज्यः। यद्युपायेनापि कार्यं न सिद्धयति ततो मरणं शरणम्। अहमप्यस्मिन्नेव व्यतिकरे दुःखितो जीवामि यतो 'जीवन्नरो भद्रशतानि पश्यति'। एवं श्रुत्वा वसन्तदेवः प्राह—'महानुभाव! कस्त्वम्? कथं वा दुःखी?' तेनोक्तम्—"कार्त्तिकपुरवास्तव्यो वणिक्पुत्रः कामलनामाहम्। अन्यदा देशानां दर्शनार्थं विनिर्गतः, परिभ्रमन् क्रमेण शंखपुरे समागतः। अन्यदा तस्मिन्नगरे शंखयक्षस्य यात्रार्थं सर्वोऽपि लोको बाह्योद्याने मिलितः। अहमपि तत्र गतः। तत्र सहकारवनमध्ये मयैका कन्यका दृष्टा। तयाऽप्यहं दृष्टः। ततो महास्नेहो द्वयोरपि सञ्जातः। ततस्तया दत्तं स्वहस्तेन ताम्बूलम्। मया चिन्तितम्—'किं करोमि? गृह्णामि किं वा न गृह्णामि?' यावदिति चिन्तयामि तावन्मत्तगजेन्द्रो निजेच्छया विचरन् तत्र समागतः। तस्य भयेन कन्यकापरिवारो नष्टः। परन्तु कन्यका न नष्टा। यावत्[1] स हस्ती तां कम्पमानसर्वाङ्गीं कन्यां गृह्णाति तावन्मया लकुटेन हतो हस्ती पश्चिमे भागे। कन्यकां मुक्त्वा गतो हस्ती। ततो मिलितः कन्यापरिवारः। प्रशंसितोऽहं कन्यापरिवारेण। अत्रान्तरे समागतं नागवृन्दम्। तेन [2]दिशोदिशं पलायितो लोकः। ततो मया न ज्ञाता सा कन्या कुतो गता। कियन्ति दिनान्यहं तत्र नगरे भ्रमित्वा तस्याः कन्यायाः शुद्धिमप्राप्य शून्यचित्तोऽत्रागतः। तस्यां कन्यायां ममानुरागोऽस्ति। किन्तु तस्याः शुद्धिमजानतो मम नास्ति सम्प्राप्तिः। तथाप्यहं मरणं नाङ्गीकरोमि, पुनस्तव केसरातावस्त्युपायः। प्रभाते सा परिणेष्यते। ततोऽद्य तया केसरया कन्दर्पदेवस्य पूजा कर्तव्या। तां पूजामेकाकिन्येव करोतीति नियमः। तावदावामनागतायामेव नगरमध्ये प्रविशावः। तत्र कन्दर्पभुवने यावः। ततोऽहं तस्यां कन्दर्पभुवन आगतायां तस्याः केसरायाः सम्मतेन तस्या वेषं गृहीत्वा गृहे गमिष्यामि। त्वया त्वस्मासु दूरं गतेषु केसरां गृहीत्वा त्वरितं गन्तव्यम्।' 'युक्तमुक्तं त्वया' इत्युक्त्वा हर्षितो वसन्तदेवः कामपालं प्रति प्राह—'मित्र! मम कार्यं तवैव व्यसनम्।' इतश्च केनापि छिक्कनम्। कामपालेनोक्तम्—'तव कार्यकरणेन ममाभ्युदयः।'

---

१. तावति for तावत् Z. २. दिशो is missing in A.

अत्रान्तरे केनापि निजकार्ये प्रत्येवमुक्तम्—'अत्र न सन्देहः।' गृहीतशकुनार्थेन प्रतिपन्नं वसन्तदेवेन तस्य कामपालस्य वाक्यम्। द्वावपि नगरमध्ये प्रविष्टौ। भोजनकृत्यं कृत्वा सन्ध्यासमये द्वावपि कन्दर्पभुवने गतौ। कन्दर्पप्रतिमापृष्ठे द्वावपि निलीय रहितौ। क्षणान्तरे तूर्यनिर्घोषः श्रुतः। 'केसराऽऽगच्छति' इति श्रुत्वा द्वावपि हर्षितौ। क्रमेणागता तत्र केसराऽङ्गचेष्टया प्रियसमागमं चिन्तयन्ती। सुखासनादुत्तीर्णा केसरा। प्रविष्टा कन्दर्पमन्दिरे। प्रियङ्कराहस्ताद् गृहीतं पूजोपकरणम्। ततश्च प्रियङ्करया पिहितं द्वारम्। केसरया कृता पूजा। कन्दर्पदेवस्य पूजानन्तरं कन्दर्पदेवं प्रत्येवं[1] भणितम्—'स्वामिन्! रतिरमण! सकलप्राणिनां चित्तानि त्वमुपलक्षयसि, तावन्मम चित्तं जानन्नपि अनिर्दिष्टभर्त्रा सह मां कथं योजयसि? वसन्तदेवं विनाऽन्यत्र न रमते मम चित्तम्। अथवा साम्प्रतमनेनोपालम्भेन किम्? सर्वथा जन्मान्तरेऽपि तव प्रसादेन मम स एव भर्ता भवतु' इति भणित्वा तस्यास्तोरण आत्मानमुद्बध्नाति। वसन्तदेवेन निर्गत्य रक्षिता केसरा। 'कुत एष' इति तं दृष्ट्वा विस्मितैषा। वसन्तदेवेन भणितम्—'यस्त्वया कन्दर्पदेवाद् वसन्तदेवो वरः प्रार्थितः सोऽहमेष मम मित्रम्। आवां प्रथममेवात्र प्रविष्टौ[2]। तव हरणार्थमुपायः कृतः। ततस्त्वं निजमाभरणादिकमस्य मम मित्रस्य समर्पय, यथा तव वेषधार्यहं तव गृहे यामि यथाऽऽवां देशान्तरं यावः' इति भणिता सा केसरा निजवेषं कामपालाय प्रयच्छति। कामपालस्य वेषं गृहीत्वा स्वयं कन्दर्पपृष्ठे निलीय स्थिता। कामपालोऽपि स्त्रीवेषधारी सर्वतो वस्त्राच्छादितदेहो नारङ्गीपिहितवदनो मदनभुवनाद् द्वारमुद्घाट्य बहिर्निस्सृतः। प्रियङ्कराहस्ते पात्रीं समर्प्य तस्याः करे लगित्वा सुखासने चटितः। तत्कालं तदुत्पाटितं कर्मकरैः सुखासनम्। परिवारेणाज्ञातो गतः पद्मनन्दिश्रेष्ठिगृहे। सुप्रयुक्तस्य दम्भस्य ब्रह्माप्यन्तं न गच्छति। गृहे गत्वा सुखासनादुत्तीर्य वधूगृहं नीतः। प्रियङ्करया परं भणितम्—'प्रियासमागममन्त्रं स्मर' इत्युक्त्वा बहिर्निस्सृता प्रियङ्करा। कामपालोऽपि रतिसमागममन्त्रं स्मर्तुं प्रवृत्तः। इतश्च

१. A. adds प्राह after प्रति. २. प्रथमौ for प्रविष्टौ A.

केसराया मातुलपुत्री शंखपुरवासिनी मदिरानाम्नी तत्र विवाहे समागता। एतेन कामपालेन पूर्वं या दृष्टाऽऽसीत्, वधूगृह आगत्य वक्तुं प्रवृत्ता—'सखि! साम्प्रतमावयोर्वक्तुमवसरोऽस्ति। ततोऽहं किञ्चित्कथयामि, उद्वेगं परिहर यतः सर्वप्राणिनामिष्टानिष्टकार्येषु विधिरेव प्रमाणम्। शंखपुरे स्थितया सर्वोऽपि तव वृत्तान्तः श्रुतः। वसन्तदेवं विनाऽन्यत्र न रमते तव चित्तम्। पुनः सखि! त्वं धन्या वर्त्तसे यया प्रियेण सह दर्शनालापादिकं प्राप्तम्। पुनर्मम दारुणं वृत्तान्तं शृणु। अन्यदाऽहं शंखयत्तस्य यात्रायां परिवारेण सह बाह्योद्याने गता। तत्र कन्दर्पसमानः कोऽपि तरुणः पुरुषो दृष्टः। मया सखीहस्तेन तस्मै ताम्बूलादिकं प्रहितम्। तेनाहं मत्तगजेन्द्राद् रक्षिता, पुनरपि हस्तिभयादहं नष्टा। स युवा कुत्रापि गतो न लभ्यते। अनेकधा विलोकितोऽपि परं न प्राप्तः। तत्प्रभृत्यहं कुत्रापि निर्वृतिं न प्राप्नोमि। स्वप्ने मया स पुमान् दृष्टः। परं कदापि प्रत्यक्षो न दृष्टः। एवमालापमात्रं प्रेमास्ति, विधिवशेन संयोगो भविष्यति। अस्मिन् व्यतिकरे यन्मम दुःखं तदहमेव जानामि। त्वं मम प्राणसमा। अतस्तवाग्रे सर्वं मया निवेदितम्, तावद् भगिनि! खेदं मुञ्च, धीरा भव। अनुकूलविधिवशेन सर्वं सुन्दरं भविष्यति। अथ कामपालो भणति—'मृगाक्षि! तदा यक्षमहोत्सवे त्वया यो युवा पुरुषो दृष्टः स एषोऽहम्। अनुकूलविधिवशेन वसन्तदेवस्य केसरया सह संयोगो जातः। तथाऽऽवयोरपि संयोगो बभूव। तच्चिन्तां मुञ्च।' ततो मदिरा प्रकटितनिजदेहं तमुपलक्ष्य परितुष्टा जाता। भयवशेन किञ्चिदपि वक्तुं न समर्था। ततो भणितं कामपालेन। 'प्रिये! भयं मुञ्च। मम निर्गमद्वारं दर्शय।' ततो मदिरया गृहोद्यानस्य पश्चिमद्वारमुपदिष्टम्। तस्मिन् द्वारे प्रियासहितः कामपालो निर्गतः। तत्र केसरया सह पूर्वमागतस्य मिलितो वसन्तदेवस्य। तौ द्वावपि समवसरणे समागतौ। जिनेन कुरुचन्द्रस्य राज्ञो दर्शितौ। 'यत्पूर्वभवे पञ्चभिर्मिलित्वा मुनये दानं दत्तं तत्तव दिनं प्रति पञ्चदिव्यवस्तूनि दोयनिकायामागच्छन्ति। अतः कारणात्तानि पञ्च वस्तूनि एतेषामदत्त्वा भोक्तुं न शक्नोषि' इति श्रीशान्तिमुखात् पूर्वभवं श्रुत्वा सर्वेषां जातिस्मरणमुत्पन्नम्। पूर्वभवः स्मृतः। जिनं

नमस्कृत्य राज्ञा ते सन्तदेवकामपालप्रभृतयो निजसहोदरा इव गृह नीताः। तैः सह राज्यं करोति। कियन्तं कालं यावद् राज्यं परिपाल्य पुत्रं राज्ये निवेश्य पञ्चभिरपि दीक्षा गृहीता। अतीचाररहितं चारित्रं पालयित्वा पञ्चापि स्वर्गं जग्मुः॥

इति साधारणदाने कुरुचन्द्रकथानकम्॥

## दानोपरि धन्यकथा।

जो चारित्तनिहाणं निम्मलतमनियमनिमियदेहीणं।
साहूण देइ दाणं सो सुहं लहइ धन्नो व्व॥ १॥

अत्रैव भरतक्षेत्रे सुप्रतिष्ठं नाम नगरम्। तत्र जितशत्रुर्नाम राजा। अन्यदा पूर्वं सधनं पश्चाद्विधिवशेन निर्धनमेकं कुलमन्यपुराद्व्रजमानं तत्र नगरे समागतम्। तस्मिन् कुले प्रकृत्या विनीते दानलालस एकस्तरुणः पुत्रो लोकानां वत्सरूपाणि चारयति। अन्यदिने तत्र नगरे महोत्सवः सञ्जातः। ततः सर्वो लोको बहुविधभोजनानि गृहीत्वा उद्याने गतः। तं लोकं दृष्ट्वा महोत्सवं कर्तुं तस्य वत्सपालकस्य मनोरथः सञ्जातः। नगरपरिसरे वत्सरूपाणि मुक्त्वा गृह आगतः। माता भणिता—'मातर्ममापि महोत्सवं कर्तुं सामग्रीं कुरु।' माता पुत्रवचनं श्रुत्वा पूर्वऋद्धिं स्मृत्वा मन्युभरभरितकण्ठा करुणास्वरं रोदितुं प्रवृत्ता, यतः स्त्रीणां क्रन्दनं विनाऽन्यद् बलं नास्ति। प्रातिवेशिकाभिः स्त्रीभिस्तस्याः क्रन्दनं श्रुत्वा तस्य वत्सपालकस्य माता एवं भणिता—'कथं रोदिषि?' इति ताभिः पृष्टे सा निजवृत्तान्तं प्राह। ततस्ताभिरुत्पन्नकरुणाभिः पुत्रपरितोषहेतोर्दुग्धतण्डुलगुडाज्यादिकं तस्यै समर्पितम्। तत आरब्धं पायसम्। ततो भोजनं लात्वा भोजनार्थमुपविष्टः स बालकः। परिवेष्टितं घृतगुडसहितं परमान्नं मात्रा उष्णं इति भणित्वा। यावत् स बालकः प्रतीक्षति तावत् तपःशोषिताङ्गो जितेन्द्रियो जितपरीसहो भिक्षार्थं मुनिः समागतः। बालकस्तं दृष्ट्वा निजहृदये चिन्तयति—'अहो! अहं

१. निम्मल is missing in Z. २. ०तय० for ०तम० Z. ३. निमय for निमिय Z. ४. For this line A. reads साहूणं सो सुखं लहइ धन्नो व्व। ५. बहुविधि for बहुविध Z. ६. ततो रब्धं for तत आरब्धं Z.

कुसुमपालस्य गृहे पुत्री जाता। ततो गोभद्रकुसुमपालौ द्वावपि राजमन्दिरे गतौ। 'स्वामिन्! अद्यास्मद्गृहे पुत्र्यौ उत्पन्ने।' राज्ञा सम्मानितौ, एवं भणितौ—'मम पुत्र्या सह ते द्वे अपि सख्यौ भवताम्।' ततौ राजादेशं गृहीत्वा स्वगृहे गतौ। गोभद्रव्यवहारिणा निजपुत्र्याः सुभद्रा इति नाम कृतम्। मालाकारेण कुसुमपालेन निजपुत्र्याः पुष्पवतीति नाम कृतम्। राज्ञा निजपुत्र्याः सोमश्रीः इति नाम कृतम्। इतश्च सा राजपुत्री ताभ्यां सखीभ्यां सह वर्धते। क्रमेण तिस्रोऽपि यौवनं प्राप्ताः। तास्तिस्रोपि इति चिन्तयन्ति—'अस्माकं तिसृणां कः पतिर्भविष्यति?' अन्यदा धन्यं दृष्ट्वा पुष्पवत्या अनुरागो बभूव। चिन्तितं निजमनसि। 'अहो सुरूपः पुण्यवानयं पुरुषः, यदस्मिन्नागते येषां वृक्षाणामग्रे एकमपि पुष्पं नासीत् ते सर्वे पुष्पिताः फलिता जाताः।' ततस्तिसृणामप्यस्माकमयं युक्तो भर्ता। ततः केनाप्युपायेन ज्ञापयामि राजपुत्रीम्। ततस्तया धन्याद्विचित्रभङ्गयुक्ता कुसुममाला कारिता। राजमन्दिरे गत्वा स्वसख्यै सोमश्रिये समर्पिता। तया तां मालां दृष्ट्वा पृष्टा—'सखि! केनैषा पुष्पमाला विनिर्मिता।' पुष्पवत्या कथितम्—'सखि! कोऽपि युवापुरुषः कन्दर्पसमरूपः सकलकलाकुशलोऽस्मद्गृहे तिष्ठति। तेन स्वविज्ञानं दर्शयितुं तवैषा माला प्रहिता।' ततस्तस्य नाम श्रुत्वा सोमश्रिया चिन्तितम्—'तं विनाऽन्यो मया न परिणेतव्यः।' ततः प्रभृति तस्य चिन्तां कुर्वाणा वामकरतलन्यस्तकपोला दीर्घोष्णश्वासविशोषिताधरा परित्यक्ताशेषकार्या तमेव चिन्तयन्ती तिष्ठति। ततो राज्ञा परिजनादेतत् पुत्रीस्वरूपं ज्ञात्वा प्रतीहारं प्रेषयित्वा कुसुमपालमालिकगृहादाकारितो धन्यः। कृतप्रणामो निवेशित उचितासने। तं सुरकुमारोपमं दृष्ट्वा चिन्तितं राज्ञा—'स्थाने कृतोऽनुरागो मम पुत्र्या।' आकारिता राज्ञा कन्या। 'धन्य' इत्युक्तो राज्ञा। एषा कन्या मया तुभ्यं दत्ता। ततो हर्षभरनिर्भरेण प्रतीच्छिता सा धन्येन। अथ सोमश्रियाऽपि तौ प्रणम्योक्तम्—'द्वयोर्मम सख्योरेष एव वरो भवतु।' ततो राज्ञा भणितम्—'यदि युष्माकं तिसृणां रोचते ततो भवतु।' एवं ततः सोमश्रिया सखीनामग्रे कथितम्। ततो राजा महदृद्ध्या ताः कन्या धन्यं परिणाययति। गोभद्रकुसुमपालौ तत्र

बह्वर्थं व्ययं कुरुतः। धन्यो राजदत्ते धवलगृहे ताभिः पत्नीभिः समं रमते। राज्ञा तस्मै धन्याय करितुरगकनककप्पडप्रमुखं बहु द्रव्यं दत्तम्। सुखेन तिष्ठति। तत्र धन्येनान्यदा गवाक्षोपविष्टेन दुःस्थावस्थौ मलिनवस्त्रौ मार्गे परिभ्रमन्तौ निजपितरौ दृष्टौ। तेन निजपुरुषान् प्रेषयित्वा निजगृहे आनीतौ, ततः स्नानं कारितौ, दिव्यवस्त्राणि परिधापितौ, धन्यस्य कण्ठे लगित्वा उच्चैस्स्वरं रुदतः। भव्यासन उपवेश्य निजपितरौ एवं भणति धन्यः—'तात! युष्माकमकस्माद् दारिद्र्यं कुतः? तावन्मात्रं कथं द्रव्यं त्रुटितम्?' जनकः प्राह—'त्वय्यस्मद्गृहान्निर्गते तत्कालं सर्वोऽपि विभवः क्षयं गतः। कोऽपि विभवश्चौरैर्हृतः। कोऽपि प्रदीपेनाग्निना दग्धः। कोऽपि पुत्रैः कृतापराधेन राज्ञा गृहीतः' इति सकले धने त्रुटिते लज्जया तत्र वसितुमशक्नुवन्तो वयमत्र समागताः। तावज्ज्येष्ठबान्धवा बाह्ये तिष्ठन्ति। ततो धन्येन पुरुषं प्रेष्यानीताः स्वगृहे स्वबान्धवाः। तैरुक्तम्—'बान्धव! अस्माभिर्न कृतं तव रुचिरम्। ततो गुणाकर! क्षमस्वास्माकमपराधम्।' ततश्च धन्यो धनं दत्त्वा तान् निजबान्धवान् अन्यत्र नगरे विसर्जयति। धन्यस्य प्रभावेन ते सर्वेऽपि महर्द्धयो जाताः। जननीजनकाभ्यां सर्वं गृहव्यापारं दत्त्वा प्रियाभिः सह भोगान् भुङ्क्ते धन्यः। अन्यदिने सुभद्रा क्रन्दनं कुर्वाणा धन्येन पृष्टा—'मृगाक्षि! कथं रोदिषि?' तयोक्तम्—'प्रियतम! शालिभद्रनामा सहोदरो मम धर्मघोषाचार्यसमीपे धर्मं श्रुत्वा संविग्नो बभूव। चारित्रं गृहीतुकामो जनन्या भणितः—'वत्स! दुष्करं चारित्रम्। सुखलालितोऽसि त्वम्। तावद् यदि तव निर्बन्धस्ततः स्तोकं स्तोकं विषयसौख्यं त्यज यथा तव देहः संयोग्यो भवति।' ततो जननीवचनेन दिने दिने संक्षेपं करोति भोजनभाषणतूलिकाविलेपनादीनामिति भोगनिस्पृहः शालिभद्र आचाम्लं तपः करोति, एकेन वस्त्रेण महीतले स्वपिति। साम्प्रतं निश्चयमेव दीक्षां ग्रहीष्यतीति दुःखकारणं जानीहि।' ततो हसित्वा धन्यो भाषते—'अहो कातरः शालिभद्रो यः सहसैव संयमभारमुत्क्षेप्तुं न शक्नोति।' अथ सोमश्रीर्भणति—'स्वामिन्! स सुकुमारो न पुनः कातरः, दुष्करसंयम-

1. प्रदीपने for प्रदीपेन Z.

योग्यं शनैः शनैर्देहं करोति।' धन्येन पुनर्भणितम्—'धीरपुरुषाणां किं दुष्करम्?' ततो हसित्वा सुभद्रयोक्तम्—'यद्येतन्न दुष्करं ततो यूयमप्येतत् कथं न कुरुत?' ततो धन्येनोक्तम्—'यदि यूयं कथयत धर्मं कुरु ततः करोमि, किं वा न करोमि ततो दूषणं देयम्।' ततस्ताभिर्भणितम्—'यदि त्वं संयमं ग्रहीष्यसि ततस्तीर्थङ्करपादमूले वयमपि दीक्षां ग्रहीष्यामः।' इतश्च तस्मिन् नगरे जितजिनानन्दः श्रीवीरः समवसृतः। आदेशकारिपुरुषैर्धन्यस्याग्रे कथितं श्रीवीरसमागमनम्। ततः परितुष्टो धन्यः शिबिकारूढो महर्ध्या तिसृभिर्भार्याभिर्युक्तः श्रीवीरवन्दनार्थं निष्क्रान्तः। गुरुकविभूत्या देव इव मणिभूषणैः शोभमानो व्रतग्रहणार्थं निर्गतः शालिभद्रः। ततो वाहनानि मुक्त्वा तौ द्वावपि समवसरणे प्रविश्य जिनं नमस्कृत्य यथास्थान उपविश्य धर्मं शृणुतः। धर्मं श्रुत्वा शालिभद्रः स्वयमेव केशानुत्पाट्याष्टभार्याभिस्साकं दीक्षां गृह्णाति। ततो धन्योऽपि तिसृभिर्भार्याभिर्दीक्षां गृह्णाति। ततश्चिरकालमुग्रतपः कृत्वाऽन्तकालेऽनशनं गृहीत्वा सर्वार्थसिद्धिविमाने देवावुत्पन्नौ॥

इति दानोपरि धन्यकथा॥

## श्रीवीतरागसङ्घपूजाविषये आरामशोभाकथानकम्।

सद्धर्ममूलसम्यक्त्वनैर्मल्यकरणे सदा।
यतध्वं तच्च तीर्थेशसङ्घपूजादिभिर्भवेत्॥ १॥

इहैव भरते कुशाढ्यदेशे स्थलाश्रयो ग्रामोऽस्ति। तत्परितो योजनान्तं यावत् तृणानि मुक्त्वाऽन्यो वृक्षः कदाचिन्नोत्तिष्ठति। तत्राग्निशर्मा नाम द्विजः। तस्य ज्वलनशिखा नाम्नी ब्राह्मणी, विद्युत्प्रभा नाम्नी पुत्री। तस्यामष्टवार्षिकायां माता व्यपद्यत। ततो गृहकर्माणि विद्युत्प्रभा करोति। सा प्रभात उत्थाय गां दोग्धि। प्रमार्जनलिम्पनादिकं कृत्वा धेनूश्चारयितुं बहिर्याति। मध्याह्ने गाः समानीय जनकं भोजयित्वा पश्चात् स्वयं भुङ्क्ते। पुनः सुरभीश्चारयितुं वने याति। श्रान्ता सन्ध्यासमये गृह आगत्य गृहकर्माणि करोति। प्रतिदिवसमेवं कर्म कुर्वाणाऽतिकुटुम्बभारेण खिन्ना जाता। अन्यदा गृहभारभग्ना पितरं प्रत्यवोचत्—'तात! अन्यां जननीं समानय,

यथाहं सुखीभवामि।' इति पुत्रीवचनं श्रुत्वाऽनेनान्या स्त्री परिणीता। सा सर्वं गृहभारं विद्युत्प्रभामध्ये निक्षिप्य स्वयमङ्गविलेपनस्नानमण्डनानि करोति। विद्युत्प्रभया चिन्तितम्—'अहो मया स्वसौख्यहेतोरन्या माता पितृपार्श्वाद् आनायिता। ततोऽस्यां समागतायां विशेषतो व्यापारवर्धनादहं कष्टिता। इयं मम माता पादोपरि पदं कृत्वा सदा सुखेन तिष्ठति।' एवं क्लेशेन वर्तमाना द्वादशवार्षिका बभूव। इतश्चान्यदा गोषु तृणं मुक्त्वा स्वयं सुप्ता। तदा कृष्णवर्णो महाकायो भयभीत एको भुजङ्गमस्तस्याः समीप आगतः। ततो मनुष्यभाषया तामुत्थाप्य सर्पो वक्तुं प्रवृत्तः—'अत्यर्थं भयभीतोऽहं तव शरणं प्रविष्टः। इमे पापा गारुडिका मम पृष्ठे समायान्ति, वत्से! मामादाय करण्डमध्ये क्षेप्स्यन्ति ततो निजोत्सङ्गे मां संस्थाप्योत्तरवस्त्रेणाच्छादय।' ततो विद्युत्प्रभया निश्शङ्कचित्तया तथैव कृतम्। ततो गारुडिका ओषधीहस्तास्तत्र समागताः। गारुडिकैरेषा बाला पृष्टा—'बाले! त्वयामुना मार्गेणागच्छन् सर्पो विलोकितः? विप्रसुता गारुडिकानूचे—'अहं सुप्ताऽभूवम्, ततः किञ्चिन्न जानामि।' ते परस्परं जगदुः—'एषा बाला पन्नगं दृष्ट्वा भयभीता भवति।' ततो गारुडिका गताः। तया सर्पो भणितः—'सर्वे गारुडिका गताः। शङ्कां मुक्त्वा विनिस्सर।' ततः सर्पं त्यक्त्वा देवः प्रत्यक्षीभूय तां कन्यां प्रत्यूचे—'वत्स! तवोपकारेण तुष्टोऽहम्। ततो वरं वृणु।' सा प्राह—'सौख्येन यथा गाश्चारयामि ममोपरि छायां कुरु।' देवेन चिन्तितम्—'अहो मुग्धा एषा छायां प्रार्थयति।' ततस्तस्या उपरि महारामं व्यधात्। तच्चैवंविधः—

संवर्तकैः फलैः पुष्पैर्निचितः पत्रसंकुलः।
गन्धलोलालिसङ्कीर्णो रुद्धादित्यकरः सदा॥ २॥

ततो देवः प्राह—'वत्से! यत्र त्वं स्थास्यसि अथवा यास्यसि अयमारामोऽपि त्वया सह तत्र तत्र यास्यति, व्यसने मां स्मरेः' इत्युक्त्वा देवोऽदृश्यो बभूव। अथोपर्यास्थित आरामो गोभिः सह रात्रौ गृहे गतः। मात्रोक्तम्—'वत्से भोजनं कुरु।' तयोक्तम्—'मम नास्ति क्षुधा।' ततश्च रजनीपश्चिमे प्रहरे गोसंयुक्ता सा विद्युत्प्रभा

१. सुखिनी भवामि for सुखीभवामि Z.

बहिर्ययौ। एवं सदैव साऽऽरामसंयुक्ता गृहे याति आयाति च। अन्यदाऽऽरामतले सुप्तायास्तस्याः पाटलीपुत्रनायको दिग्यात्रां विधाय तत्र वने समागतः। सर्वमनोहरं तमारामं वीक्ष्य राजा सहकारतल उपाविशत्। ततो राजादेशाद् वृक्षेषु गजाश्वकरभादयो बद्धाः। वृक्षशाखासु लम्बिताः प्रस्तरादयः। ततश्च सा पुत्री सुभट-शब्दैर्जागृता। कुञ्जरादीनां भयादुत्त्रस्ताः सुरभीर्विलोकयितुं सा बाला चलिता। एषा यदा धेनूनां वलनायं[1] दधावे तावदश्वादिकं त्वाऽऽरामोऽपि तया समं जगाम। 'किमेतत्' इति सम्भ्रान्तेन राज्ञा निजामात्यसमीपे पृष्टम्—'मन्त्रिन्! इदं किमद्भुतं दृश्यते ?' मन्त्रिणोक्तम्—'देव निश्चितमस्या एव प्रभावः।' सचिवेन बालिका पृष्टा—'त्वं पश्चाद्वलस्व, तव धेनूरानेष्यामः।' सा पश्चाद्वलिता। आरामोऽपि तया सह वलितः[2]। अश्ववारा राजादेशात्सुरभीरानयामासुः। राजा कुमारत्वं विचार्य तस्या विषये रागं चकार। ततो मन्त्रिणा राज्ञोऽभिप्रायं ज्ञात्वोक्तम्—'वत्से! एनं जितशत्रुनामानं राजानं पतिं कुरु।' बालिका प्राह—'एतद्ग्रामवास्तव्योऽग्निशर्मा द्विजो जानाति। एतदहं न जानामि।' ततो मन्त्री राजादेशात्तस्मिन् ग्रामे गत्वा विप्रमयाचत—'इमां कन्यां जितशत्रुनरेन्द्राय प्रदेहि।' ब्राह्मणः प्राह—'प्राणा अपि राज्ञे दत्तास्तनया किमुच्यते।' ततो दत्ता कन्या विप्रेण। जितशत्रुराज्ञा गन्धर्वविवाहेन परिणीता। यदस्या-मुपरि सर्वदाऽऽरामः शोभते तस्मात्कारणादारामशोभा इति नाम कृतं राज्ञा। तस्मै निजश्वशुरविप्राय द्वादश ग्रामा दत्ताः। ततो राजाऽऽरामशोभां गजस्कन्धे निवेश्योपरि स्थित आरामसहितो निजनगरं प्रति चलितः। महोत्सवपुरस्सरं राजा धवलगृहं समागतः। आरामशोभासहितो महाविषयसौख्ये निमग्नो राजा राज्यं करोति। धवलगृहोपर्यारामः स्थितः। इतश्चाग्निशर्मविप्रस्य ब्राह्मणी पुत्रीं सुषुवे। क्रमेण सा पुत्री तारुण्यं प्राप। ततस्तस्या माता चिन्तयति—'यद्यारामशोभा म्रियते ततो राजेमां परिणयेत्' इत्यारामशोभाया मारणोपायं चिन्तयन्त्या तया ब्राह्मण एवमुक्तः—'स्वामिन्!

१. बालनां for वलनायं A. २. The portion आरामोऽपि तया सह वलितः is missing in Z.

आरामशोभायाः कृते किञ्चिद्भक्ष्यादिकं न प्रेषयसि ।' ब्राह्मणेनोक्तम्—'तस्याः किञ्चिन्न्यूनं नास्ति ।' ब्राह्मणी पुनः प्राह—'यद्यपि न्यूनं नास्ति तथापि पुत्री पितृकुलादागतं वाञ्छत्येव ।' ततः प्रधानद्रव्यसंयुक्तास्तया कृताः सिंहकेसरा मोदकाः । परन्तु विषसम्पूर्णा विहिताः । तान् मोदकान् अन्यत्र घटे प्रक्षिप्य ब्राह्मणं प्रति प्राह—'स्वामिन् ! स्वयं गत्वा इमान् आरामशोभायाः समर्पय । सापि मदीयं वाक्यं भणितव्या । इमे मोदकास्त्वयैव भोक्तव्या अन्यस्मै न देयाः । एषां मोदकानां विरूपकत्वेन राज्यकुले हास्यं भवति, यतो ग्रामवासिनां कीदृग् विज्ञानम् ।' तस्याः कौटिल्यमजानानः घटे मुद्रां दत्त्वाऽग्निशर्मा चचाल । क्रमेण पाटलीपुत्रनगरे गतः । नगरोद्याने एकस्य वटवृक्षस्य छायायां परिश्रान्तः सुप्तः । इतश्च तेनैव नागकुमारेण वटच्छायायां सुप्तो ब्राह्मणो दृष्टः, कर्मधर्मसंयोगादवधिज्ञानेनारामशोभायाः पिता । 'हुं ज्ञातम् । विमात्रा विषमिश्रितशंबलं दत्त्वाऽऽरामशोभामरणहेतवेऽयं प्रहितः ।' तत इति ज्ञात्वा तेन देवेन विषमपहृतं शंबलतः । आरामशोभया राज्ञ उक्तम् । 'स्वामिन् ! अत्र घटे स्वदृष्टिर्दीयतां यथोद्घाट्यते घटः ।' राज्ञोक्तम्—'देवि ! त्वदीयस्थाने मम कोपि न विद्यते तत् स्वयमेवोद्घाटय ।' ततो देव्या घट उद्घाटितः । ततो घटमध्यान्मर्त्यलोकदुर्लभो गन्ध उच्छलितः । अमृतसदृशास्तत्र मोदका दृष्टाः । राज्ञोक्तम्—'देव ! सर्वासां राज्ञीनामेकैको मोदको दीयताम् ।' ततो राजादेशात् सर्वासां राज्ञीनामेकैको मोदको दत्तः । आस्वादितेषु मोदकेषु सर्वा राज्य आरामशोभां प्रशंसन्ति—'अहो अस्याः पितरौ धन्यौ यौ स्वपुत्र्या ईदृशान् राज्ञां दुर्लभान् मोदकान् प्रेषयतः ।' इतश्च अग्निशर्मा राज्ञे प्राह—'स्वामिन् ! कियतो वासरान् आरामशोभा पितृगृहे प्रेष्यतां यथा मातृदर्शनं कुरुते ।' राज्ञोक्तम्—'राजदारा असूर्यम्पश्या भवन्ति, त्वमेतदपि न जानासि ।' ततो गृहे गतोऽग्निशर्मा विप्रः । पत्न्यग्रे सर्वस्वरूपं कथितम् । तया चिन्तितम् । 'अहो मम चिन्तितं न सिद्धम् । ततो निश्चितं सवीर्यं विषं नैव, तदन्यदुग्रविषं मध्ये प्रक्षिप्य पुनः प्रेषयिष्यामि पक्वान्नम् ।' ततो रम्याः फेनिकाः कृत्वा मध्ये उग्रविषं क्षिप्त्वा तथैव ब्राह्मणहस्ते प्रेषयामास । तथैव वटतले सुप्तस्य ब्राह्मणस्य

मोदकमध्याद् देवेन विषमपहृतम्। तथैव राजकुले पक्वान्नप्रशंसा बभूव। विप्रेण गृहे आगत्य पुनः स्वपत्न्यै सर्वं कथितम्। तच्छ्रुत्वा सा पापचित्ता सन्तापं प्राप। अन्यदाऽऽरामशोभां गर्भवतीं श्रुत्वा तालपुटविषमिश्रितं शंबलं कृत्वा समर्पितं ब्राह्मणहस्ते। पुनः प्रेषितो ब्राह्मणः। उक्तश्चैवम्—'सा पुत्री गर्भवती वर्तते। अवश्यं पितृगृहे आनेतव्या। यतः प्रथमगर्भं पितृगृहे प्रसूते पुत्री।' गतो ब्राह्मणः। मार्गे सुप्तस्य देवेन तथैव विषमपहृतम्। गतो राजमन्दिरे। समर्पितं शम्बलम्। तथैव प्रशंसा जाता। ब्राह्मणेन राज्ञः समीपे पुत्री मुत्कलापिता। राज्ञोक्तम्—'भो ब्राह्मण! राजपत्न्यः कदापि पितृगृहे न प्रसुवते।' उदरे छुरिकां धृत्वा ब्राह्मणेन राजानं प्रत्युक्तम्—'युष्माकं ब्रह्महत्यां दास्यामि यदि मम पुत्रीं न प्रेषयध्वे।' अमात्यैः राजानं प्रत्युक्तम्—'स्वामिन्! अयं द्विजो[1] ग्रथिलः, कदाचिद् ब्रह्महत्यां दास्यति, ततो देवीं प्रेषयत।' ततो महतीं सामग्रीं कृत्वा प्रेषिता राज्ञा। ततो ब्राह्मणेन सह गता पितृगृहे तत्र सुखेन पुत्रं सुषुवे। अन्यदाऽऽवासपाश्चात्यप्रदेशे देहचिन्तार्थं गताऽऽरामशोभा। तस्याः पृष्ठतो लग्ना। तस्या माताऽपि सह चलिता। तत्र कूपं दृष्ट्वाऽऽरामशोभयोक्तम्[2]—'मातः! कदा प्रभृत्ययं कूपः?' मात्रोक्तम्—'वत्से! मयाऽयं कूपः कारितः[2]।' आरामशोभा यावत्कूपं विलोकयितुं लग्ना तावत्तस्याः पृष्ठ आगत्य तया कूपे क्षिप्ता। अथ तया कूपं पतन्त्या नागकुमारः स्मृतः। नागेन पतन्ती निजकरे विधृता। ततस्तस्या ब्राह्मण्या उपरि कुपितो देवः। आरामशोभयोक्तम्—'स्वामिन्! एषा मम माता' इति भणित्वा उपशामितो देवः। ततो देवेन कूपमध्ये भुवनं कृत्वा तत्र स्थापिता। आरामोऽपि तया सह कूपमध्ये प्रविष्टः। अथ विमात्रा तत्स्थाने तत्पुत्रपार्श्वे कृतप्रसविकावेषा स्वसुता शिक्षयित्वा स्थापिता। अन्यदा दैवयोगेन तस्याः शरीरं विच्छायं बभूव। ततस्तस्याः सखीभिः पृष्टा—'देवि! किमेतत्? तव शरीरं विच्छायं दृश्यते।' आरामशोभयोक्तम्—'न जानामि। अद्य कल्ये मम शरीरं नहि स्वच्छम्।' ततो विविधा उपचाराः कृताः। परमेकेनापि न

---

१. सिद्धजः for द्विजः A. २. The portion beginning with आरामशोभयो॰ and ending with कारितः is missing in Z.

बभूव देहस्वास्थ्यम् । इतश्च पाटलीपुत्रपत्तनाद् राज्ञा तामानेतुं मन्त्री प्रहितः । ततश्चलिताऽऽरामशोभा । ततो दासीभिर्विज्ञप्ता देवी । 'देवि ! आरामः सार्थे किं नैति ?' तयोक्तम्—'असावारामो जलं पातुं तृषितः कूपे प्रविष्टः, पश्चादागमिष्यति ।' गता परिवारसहिता देवी । पाटलीपुत्रपत्तने राज्ञः प्रवेशमहोत्सवः कारितः । निजपुत्रं विलोक्य हर्षितो राजा । ततो देव्या विरूपं देहं विलोक्य राज्ञोक्तम्—'देवि ! तव शरीरे एतत् किं सञ्जातम् ?' ततो दासीभिरुक्तम्—'स्वामिन् ! देव्याः शरीरे कोऽपि दोषोऽभवत् ।' ततो विषण्णचित्तेन राज्ञा पुनरुक्तम्—'देवि ! स आरामोऽपि अत्र किं न दृश्यते ?' आरामशोभयोक्तम्—'देव पानीयं पिबन् मुक्तोऽस्ति, पृष्ठे समेष्यति स्मृतमात्रः ।' ततो राज्ञा चिन्तितम्—'किमेषा सैवाऽऽरामशोभा किं वान्या ?' राज्ञाऽन्यदा देव्युक्ता—'देवि ! आराममानय ।' तयोक्तम्—'प्रस्ताव आनेष्यामि ।' राज्ञा चिन्तितम्—'निश्चितमेषा सा नाऽऽरामशोभा, अन्या काचित्स्त्री ।' अन्यदाऽऽरामशोभया देवं प्रत्येवं भणितम्—'स्वामिन् ! पुत्रविरहोऽत्यर्थं मां पीडयति, तत् तथा कुरु यथा पुत्रदर्शनं करोमि ।' देवः प्राह—'मम शक्त्या निजं पुत्रं विलोकय गत्वा । परं सूर्योदयमर्वाक् शीघ्रमागन्तव्यम् । यदि नागमिष्यसि तत् प्रभृति तव दर्शनं न दास्ये । अस्मिन् विषयेऽयं प्रत्ययः—'स्वकीयेषु केशपाशेषु एकं मृतं सर्पं पश्यसि ।' तयोक्तम्—'एवमस्तु ।' इत्युक्त्वाऽऽरामशोभा तत्कालं गत्वा सौधे गता यस्मिन् पुत्रः सुप्तोऽस्ति । सुकुमारपाणिभ्यां पुत्रमादाय क्षणं क्रीडयित्वा पुनरात्मीयस्थाने सुतमशाययत् । ततश्च पातालभुवने गत्वा निजारामसत्कं पुष्पफलोत्करं कुमारस्य चतुर्दिक्षु क्षिप्तम् । प्रभातसमये तत्पुत्रधात्री[1] तत्स्वरूपं राज्ञोऽग्रे निवेदयति । राजा तच्छ्रुत्वा प्रत्यक्षं दृष्ट्वाऽऽरामशोभां पप्रच्छ 'देवि ! इदं किं दृश्यते ?' तयोक्तम्—'स्वामिन् ! निजारामादेतत्सर्वं मयाऽऽनीतम् ।' राज्ञोक्तम्—'तर्हि साम्प्रतमानीयताम् ।' राज्ञी प्राह—'देव ! रात्रावेवानेतुं शक्यते न पुनर्दिवा ।' तच्छ्रुत्वा राज्ञा चिन्तितम्—'निश्चितं किञ्चित्साहसं कर्म ।' ततो द्वितीये दिने तथैव तत् सकलं बभूव । ततस्तृतीये दिवसे राजा एकाग्रहृदयो रात्रौ

1. तत्पुत्री for तत्पुत्रधात्री A.

दीपच्छायायां स्थितः। आरामशोभायाः सर्वाश्चेष्टा दृष्टा राज्ञा। ततो हर्षभरेण राजा एवं चिन्तयति—'आरामशोभेयम्' इति। तत्काल-मारामशोभा पुत्रमन्दिरान्निर्गता। प्रभाते आरामशोभाया भगिनीं राजाऽभणत्—'अद्य आरामोऽत्र समानेतव्यः। अन्यथाऽन्यत्कार्यं न।' एवं श्रुत्वाऽऽरामशोभा विवर्णवदना जाता—'अद्य किमुत्तरं भविष्यति' इति। इतश्चारामशोभा तत्सकलं निर्माय यावन्निवृत्ता तावद् दीपच्छायास्थितेन राज्ञा राज्ञीकरो दधे। राजा प्राह—'मां कार्यं विना किं विप्रतारयसि।' तत आरामशोभा प्राह—'स्वामिन्! अहं कदाचित् त्वां न विप्रतारयामि। किन्तु कारणं विद्यते।' राज्ञो-क्तम्—'किं कारणम्?' राज्ञी प्राह—'कथयिष्यामि साम्प्रतं मां विसर्जय।' राज्ञोक्तम्—'अधुनैव कारणेन कथितेन भविष्यति।' आरामशोभयोक्तम्—'कारणे कथिते तव पश्चात्तापो भविष्यति।' एवमुक्तोऽपि राजाऽऽग्रहं न मुञ्चति। ततश्चारामशोभया मूलतः सर्वं मातृवृत्तान्तस्वरूपं कथितम्। इतश्चारुणोदयो जातः। यावदा-रामशोभा स्वस्तं केशपाशं बद्धुं प्रवृत्ता तावत् तत्क्षणादेव मृतः सर्पः पतितः केशपाशात्। तं दृष्ट्वा राज्ञी दुःखिता जाता। 'हा तात! त्वया परित्यक्ताऽहम्' इति उच्चैःस्वरं विलपति राज्ञी। ततो राज्ञो-क्तम्—'देवि! एवं कथं खिद्यसे?' ततश्च तया सर्वोऽपि नाग-वृत्तान्तः कथितः। ततो राजा तस्या ब्राह्मण्या उपरि रुष्टः, तामानाय्य स्वयं कशाप्रहारैस्ताडयामास। आरामशोभया पदोर्निपत्य विज्ञप्तो राजा—'स्वामिन्! मुच्यताम् एषा।' ततो मोचिता साऽऽरामशो-भया। ततो निजद्वादशग्रामान् उद्दाल्य तौ द्वावपि स्वदेशान्निष्कासितौ राज्ञा। तयोः परस्परं स्नेहसारं विषयसौख्यं भुञ्जानयोः कियान् कालो गतः। इतश्चान्यदा उद्यानपालेन विज्ञप्तो राजा—'देव! अद्य चन्दनवनोद्याने विद्याज्ञानधरः श्रीवीरचन्द्रसूरिः समागतोऽस्ति।' ततोऽन्तःपुरीवर्गसहितो वन्दनाय चचाल राजा। गत्वा मुनीन्द्रं नत्वा धर्मं श्रोतुमुपविष्टः। देशनाप्रान्ते आरामशोभया पृष्टम्—'भगवन्! पूर्वभवे मया किं कर्म विहितम्?' ततो गुरुः प्राह—

"अत्रैव भरते चम्पानगर्यां कुलन्धरो नाम श्रेष्ठी। तस्य कुला-

---

१. भणति for अभणत् Z.

नन्दा नाम भार्या। तयोः सप्तपुत्र्यो वर्तन्ते। तासाममूनि नामानि—कमलश्रीः, कमलावती, कमला, लक्ष्मीका, श्रीः, यशोदेवी, प्रियकारिता। सप्तापि लक्ष्मीवतां व्यवहारिणां गृहेषु परिणीताः। इतश्चान्यदा अष्टमी पुत्री उत्पन्ना, परं पुण्यरहिता। ततस्तस्या मातापितरौ तस्या जन्मनि दुःखिनौ जातौ।' ततस्तस्या नामापि न कृतम्। क्रमेण रूढा जाता। पिता तां न पर्यणाययत्। लोकैर्भणितः—'कथं न परिणायसे कन्याम्?' ततो लोकवाक्यात् श्रेष्ठी वरचिन्तापरो जातः। अन्यदा श्रेष्ठिहट्टे मल[1]मलिनगात्र एकः पान्थः समागतः। श्रेष्ठिना पृष्टम्—'कस्त्वम्? कीदृग् जातिः? किं नाम?' तेनोक्तम्—'कौशलीनगरीवास्तव्यो नन्दननामाऽहं वणिक्पुत्रः। अन्यदा धने क्षीणे धनोपार्जनाय गौडदेशे गतस्तत्राप्यभाग्यत्वाद् धनप्राप्तिर्न बभूव। अभिमानेन पुनर्निजदेशे गतः। परसेवया जीवामि।' एवं श्रुत्वा श्रेष्ठी चिन्तयति—'मम पुत्र्या अयमेव वरो युक्तः, ततस्तस्मै दत्ता सा कन्या।' अन्यदा तेन श्रेष्ठिनं प्रत्युक्तम्—'अहं पुनर्गौडदेशं यास्यामि।' तेन श्रेष्ठिनोक्तम्—'तर्हि निजभार्यां गृहीत्वा गच्छेः।' ततो निजभार्यया सह चलितो नन्दनः क्रमेण गच्छन्नुज्जयिन्यां गतः। ततः पथिकशालायां सन्ध्याकाले गतौ द्वावपि। चन्दनेन चिन्तितम्—'कलत्रेण सह गच्छतो मम स्तोकप्रयाणैः शम्बलं त्रुटितं बहु। यदि सकलमपि शम्बलं त्रुटिष्यति ततो भिक्षैव कर्तव्या।' ततः प्रियां सुप्तां मुक्त्वा शम्बलं गृहीत्वा नन्दनो गतः। प्रभाते सा प्रबुद्धा चिन्तयति—'कुतो गतो मम भर्ता। अहमेकाकिनी किं करिष्यामि?' मम पितृगृहे गताया आदरो न भविष्यति।' ततो बहून् विलापान् कृत्वाऽऽत्मानं धीरयित्वा[2] शीलरक्षार्थं तस्यामेवोज्जयिन्यां मणिभद्रश्रेष्ठिगृहे गता। श्रेष्ठिनोक्तम्—'का त्वम्? कस्य पुत्री? को भर्ता?' तयोक्तम्—'अहं चम्पावास्तव्यकुलन्धरश्रेष्ठिपुत्री। नन्दनो नाम मम भर्ता। सा गौडदेशे यान्ती सार्थाद् भ्रष्टा।' एवं श्रुत्वा मणिभद्रेणोक्तम्—'वत्से! त्वं मम पुत्री, सुखेन मम गृहे तिष्ठ।' ततो मणिभद्रगृहे स्थिता गृहकर्माणि करोति[3]। मणिभद्रेण कोऽपि सार्थी निजपुरुषान्

---

१. मल is missing in A. २. Z. adds शीलयित्वा after धीरयित्वा. ३. Z. repeats ततो मणिभद्रगृहे स्थिता गृहकर्माणि करोति.

प्रेष्यान्वेषितः। परं शुद्धिरपि न परिज्ञाता। ततस्तस्याः पितृगृहे कुलन्धरश्रेष्ठिसमीपे पुरुषः प्रेषितः। तेन गत्वा श्रेष्ठी पृष्टः—'श्रेष्ठिन्! कियन्त्यः पुत्र्यस्तव वर्तन्ते?' कियन्त्यः परिणीताः, कियन्त्यः कुमार्यः? तत् स्वरूपं ममाग्रे निवेद्यताम्। मणिभद्रेण तु[1] कन्यां वरीतुमहं प्रेषितोऽस्मि।' तेनोक्तम्—'अष्टौ मम पुत्र्यो वर्तन्ते। ताः सप्त अत्रैव चम्पायां[2] परिणीताः। एका निजभर्त्रा सह गौडदेशे चलिता।' ततस्तेन उज्जयिन्यामागत्य मणिभद्रस्याग्रे सर्वं[2] स्वरूपं कथितम्। ततो ज्ञातवृत्तान्तो मणिभद्रस्तस्या गौरवं करोति। इतश्च मणिभद्रेण कारिते जैनप्रासादे सा पुत्री उपालपनमण्डल[3]मुख्यं धर्मव्यापारमादरात् करोति। साध्वीनां संसर्गात्सा सर्वपापरहिता बभूव। मणिभद्रो यद् यद् धनं तस्यै ददाति तद् तद् धनं विक्रीय प्रधानानि वादित्राणि जिनभुवने सा कारयामास। प्रभूतद्रव्यप्राप्तौ रम्यं छत्रत्रयं कारितम्। बहुविधानि तपांसि कृत्वा उद्यापनानि कारयामास। स्वशक्त्या सङ्घवात्सल्यं करोति। अन्यदा मणिभद्रश्रेष्ठिनं चिन्तातुरं दृष्ट्वा तया भणितम्—'तात! अद्य यूयं कथं चिन्तातुराः?' मणिभद्र आह—'पुत्रि! राज्ञाऽर्पितो देवस्यारामः। सफलपुष्पकुसुमालोऽपि अद्य सहसा शुष्कः। बहवोऽप्युपायाः कृताः। परमयमारामः पुनर्नवो न जातः। अनेन कारणेन वयं चिन्तातुराः।' तच्छ्रुत्वा सा प्राह—'तात! खेदं मा कुरु। शीलप्रभावेन वनं पुनर्नवं करिष्यामि।' इत्युक्त्वा शासनदेवतां हृदये ध्यात्वा चतुर्विधमप्याहारं प्रत्याख्याय कायोत्सर्गे स्थिता। ततश्च तृतीये दिवसे प्रत्यक्षीभूय शासनदेवतयोक्तम्—'सुश्राविके! अयं व्यन्तरोपद्रुत आरामः शुष्कप्रायस्तव शीलप्रभावेन प्रभाते तादृगेव भविष्यति' इत्युदित्वा देवी जगाम। ततश्च प्रभाते जाते सा सर्वं रात्रिवृत्तान्तं श्रेष्ठिनोऽग्रेऽकथयत्। मणिभद्रस्तच्छ्रुत्वाऽऽरामं विलोकयितुं जगाम। पुष्पफलव्याप्तं तद् वनं दृष्ट्वा श्रेष्ठीपुत्रीं बभाण—'पुत्रि! तव प्रभावेन मम मनोरथाः सम्पूर्णा जाताः, तत् त्वं पारणकं कुरु।' इत्युक्त्वा जन-

---

१. तव for तु Z. २. The portion beginning with चम्पायां and ending with सर्वं is missing in Z. ३. ॰मण्डन॰ for मण्डल Z.

मेलकं कृत्वा वाद्यमानतूर्येषु महाहर्षेण तां गृह आनयत्। सर्वैर्लोकैर्वर्ण्यमाना सा स्त्री गृहे गत्वा चतुर्विधसङ्घं प्रतिलाभ्य समाधिमरणं कृत्वा सौधर्मे देवो बभूव। ततश्च्युत्वा विद्युत्प्रभा नाम विप्रपुत्री जाता। मणिभद्रोऽपि देवलोके गतः। ततश्च्युत्वा मनुष्यो जातः। ततो मृत्वा नागकुमारो बभूव यस्त्वां प्रति वात्सल्यपरः। यत्पूर्वभवे मिथ्यात्वमोहिता पूर्वमज्ञानभावेन पापं कृतवती तत्प्रभावेन त्वं दुःखिता जाता। यत्पूर्वभवे मणिभद्रगृहे स्थिता उत्तुङ्गजिनधर्मं व्यधास्तत्प्रभावेन निरुपमं सौख्यं त्वं प्रापः। तदा यज्जिनगृहारामो निजशीलेन पुनर्नवीकृतस्तत्प्रभावेन देवतादत्तोऽयमारामस्त्वया सह भ्राम्यति। यत्पूर्वभवे छत्रत्रयं दत्तं तत्प्रभावेन सदैव छायायां तिष्ठसि। यत्पूर्वभवे जिनस्य पूजाङ्गानि दत्तानि तत्प्रभावेन तव भोगा अभवन्। जिनभक्त्या तव राज्यश्रीर्बभूव। क्रमान्मोक्षं प्राप्स्यसि' इति श्रुत्वा देवी मूर्च्छया भुवि पतिता, जातिस्मरा जाता। पूर्वभवो दृष्टः। मूर्च्छाप्रान्ते राज्ञी गुरून् प्राह—'भगवन्! यावद्राज्ञः पार्श्वादात्मानं विमोच्य भवतां समीपे दीक्षां गृह्णामि तावदत्रैव विलम्बनीयम्।' राज्ञोक्तम्—'अहमपि यावत्पुत्रं राज्ये निवेश्य दीक्षार्थमागच्छामि तावदत्रैव स्थातव्यम्।' ततो मलयसुन्दरं राज्ये निवेश्यारामशोभासहितो राजा दीक्षां जग्राह। निरतीचारं चारित्रं प्रतिपाल्य द्वावपि स्वर्गसम्पदं प्रापतुः। ततश्च्युत्वा क्रमात् कतिपयान् भवान् प्राप्य मोक्षं यास्यतः॥

इत्यारामशोभाकथानकम्॥

## शीलविषये ऋषिदत्ताकथानकम्।

अत्रैव जम्बूद्वीपे भरतक्षेत्रे मध्यदेशो वर्तते। तत्र रथमर्दनं नाम नगरम्। तत्र हेमरथो नाम राजा। तस्य सुयशा नाम्नी राज्ञी। तयोः कनकरथनामा[1] पुत्ररत्नम्। इतश्चोत्तरस्यां दिशि कावेरीनाम्नी पुरी वर्तते। तत्र सुरसुन्दरो राजा। तस्य वासुला नाम्नी राज्ञी। तयो रुक्मिणी नाम्नी पुत्री क्रमेण यौवनं प्राप्ता। नवयौवनां तां दृष्ट्वा तस्या मात्रा सर्वाङ्गीणाभरणधारिणीं कृत्वा पितुः समीपे प्रेषिता कन्या

1. A. adds राजा after °नामा.

रुक्मिणी। ततः सुरसुन्दरो राजा कृतप्रणामां तां निजोत्सङ्ग आरोप्य चेतसि चिन्तयामास—'इयं नवयौवनस्था कस्मै वराय दातव्या इति।' हुं ज्ञातम्—'हेमरथराज्ञः कुमारः कनकरथोऽस्ति। अस्याः स एव सुगुणः पतिर्भवति, नापरः' इति मन्त्रिभिः सहालोच्य तस्मै दूतं विसृष्टवान्। ततो दूताहूतः[1] स्वपितुराज्ञया कनकरथः कौबेरीं प्रति चचाल। एतस्याविलम्बितैः प्रयाणैर्गच्छतः सीमान्तवनभूमिष्वावासा जाताः। तत उष्ट्रपृष्ठेभ्यस्तीर्यमाणभारेषु, पटमण्डपपङ्क्तिषु समन्तात्ताड्यमानासु, उत्पर्याणितपृष्ठेषु तुरङ्गमेषु पृथ्वीतले वेल्लत्सु, निषादिभिः कुञ्जरेषु स्तम्भमानीयमानेषु, तस्मिन् क्षणे सिंहासनमलङ्कृत्य सहकारतले स्थितं कनकरथं कुमारं कश्चिद्दूतः समागत्याब्रवीत्—'देव! कुमार! अरिदमनो नाम स्वामी मन्मुखेन त्वां समादिशति—'यदस्मद्देशसीमामध्ये तव प्रवेशो मृत्यवे। अथ यदि सङ्ग्रामवाञ्छा तव वर्तते ततो मम पुरो भव। अथवा ममाज्ञामादाय स्वगृहान् प्रति निवर्तस्व।' तत इति दूतमुखाद् वचनं श्रुत्वा कुमारो भृकुटीभङ्गभीषणो दूतं प्रति प्राह—'रे रे दूत! इतो गत्वा तत्कुलपांसुनमात्मस्वामिनं ब्रूहि—'यदयं राजकुमारस्त्वामेव हन्तुं समायातः। युद्धकौतुकहर्षितोऽहं सन्नह्य स्थितोऽस्मि। त्वरितं प्रेषय निजस्वामिनम्' इत्युक्ते दूतोऽपि गत्वा निजस्वामिनेऽखिलं कनकरथकुमारोपदिष्टं वृत्तान्तं कथयामास। अरिमर्दनोऽपि तच्छ्रुत्वा कनकरथकुमारं प्रति योद्धुं सर्वसेनया सह चचाल। ततो वार्ताश्विभिस्तमायान्तं विज्ञाय तस्य संमुखं कुमारोऽपि चचाल। अथ मिलितयोः सैन्ययोर्दारुणो रणो बभूव। तस्मिन् क्षणे तूर्यशब्दसुभटसिंहनादगजबृंहितहयहेषितैर्विश्वं नादमयं जातम्। अथ कुमारोऽपि हयवेगेन गत्वा अरिदमनं प्राह—'अरे सङ्ग्रामसरोभेक! विवेकविकल! अयमहमागतः, कुरु आयुद्धम्' इत्युक्त्वा विद्युत्फालं किरणं दत्त्वा कुमारो जीवन्तमग्रहीत्। तं सार्थे गृहीत्वा कतिपयानि प्रयाणानि दत्त्वा पुनस्तं मुमोच। सोऽप्यरिदमनो वैराग्ययुक्तो राज्यं त्यक्त्वा दीक्षां जग्राह। निरतीचारं चारित्रं प्रतिपाल्य नमितीर्थङ्करस्य तीर्थे शिवं जगाम। कुमारोऽपि व्रजन्नेकामटवीं गतः। तत्रान्तरे कुमारस्य सेनावासान्

1. ०दूतः is missing in Z.

दत्त्वाऽटवीं नगरीसदृशीमकरोत्। इतश्च जलविलोकनाय गतैः पुरुषैः सन्ध्यासमय आगत्य कुमारो नमस्कृतः। कुमारेण पृष्टाः—'कथं भो! भवतामियती वेला लग्ना।' तैरुक्तम्—'देवादेशादितः स्थानाद् वयमेकस्मिन् वने गताः। तत्र समुद्रसमानं सरो दृष्टम्। यावद्वयं तस्मिन् वने स्थिताः स्मस्तावद् दोलाकेलिं कुर्वती [1]जितस्वर्वधूरूपाऽस्माभिरेवंविधा कन्या दृष्टा। अस्माकं पश्यतामेव साऽकस्मात्क्षणेनादृशीबभूव। ततोऽस्माभिर्वृक्षाद् वृक्षं तद्वनं विलोकयद्भिर्नैव दृष्टा। ततोऽस्माकमियती वेला लग्ना।' कुमारोऽपि इति श्रुत्वा विस्मयरसेन तरलोऽभवत्। इतश्च सूर्योऽस्तं गतः। कुमारोऽपि तान् विसृज्य सान्ध्यं विधिं कृत्वा हंसतूलिकामलङ्कृत्य सुष्वाप। प्रभाते जाते वदनाम्भोजं प्रक्षाल्य देवपूजां कृत्वा प्रयाणाय जयढक्कामदापयत् कुमारः। ढक्कानिनादं श्रुत्वा सर्वं सैन्यं प्रयाणोपक्रमं चकार। कुमारोऽपि निजैः कतिपयै राजकुमारैर्वेष्टितश्चरैर्निर्दिश्यमानमार्गोऽग्रेसरश्चचाल। इतश्च जलविलोकनाय गतैर्यत्र प्रदेशे सा कन्या दृष्टा तत्रैव कुमारो गतः। दैवयोगेन तत्रैव कुमारस्तां कन्यां ददर्श। तां दृष्ट्वा चिन्तयति कुमारः—'यद्येषा स्वर्वधूस्तत इन्द्रस्य नेत्रमाला सफला। अथवा यदीयं भुजगी ततो भोगी स एव भोगीशः। ईदृशं स्त्रीरत्नमस्मिन् मर्त्यलोकेऽपि न घटते। किं कर्पूरपूरो लवणाकरे जायते?' कुमार इति चिन्तापरवशो यावदस्ति तावत्पाश्चात्यं सैन्यं समागतम्। ततश्च पाश्चात्यसैन्यकलकलं समाकर्ण्य सा नष्टा। तत्र सरोवरस्य परितः सैन्येनोत्प्रयाणकं चक्रे। कुमारोऽपि कन्दर्पेणाकृष्टचेताः तां सुलोचनां विलोकयन्नेकं चैत्यमलोकयत्। ततः कुमारेण चिन्तितम्—'अस्मिन् चैत्ये सा सुलोचना भविष्यति' इति कारणात्तस्य मध्ये विवेश। ततश्च कुमारस्तत्र प्रासादे नाभेयस्य विभो मूर्तिं ददर्श। ततः प्राज्यं पुष्पसमूहमानाय्य जिनोत्तममानर्च। जिनं पूजयित्वा स्तुतिमिमां चकार—

'अद्य मे सफलं चक्षुरद्य मे सफलं शिरः।
अद्य मे सफलः पाणिरद्य मे सफलं जगत्॥ १॥

---

१. यतिस्वर्व for जितस्वर्वधू Z.

तुष्टोऽसि वन्दितोऽसि त्वं स्तुतोऽसि पूजितोऽसि यत् ।
वदन्निति स तीर्थेशं प्रणनाम मुहुर्मुहुः ॥ २ ॥

इतश्च तस्मिन्नवसरे प्रलम्बितजटाभरो जराजर्जरवपुरेको मुनिः समागतः। तयैव नायिकया प्रौढोदूढकरण्डकमेवंविधं मुनिं दृष्ट्वा कुमारः कौतुकोत्तानलोचनो बभूव। साऽपि बाला तं कुमारं दृष्ट्वा चिन्तयति—

'किमिन्द्रः किमुत चन्द्रः किं वा चाक्षौ दिवाकरः।
देवः किमथवा साक्षादयं मकरकेतनः ॥ ३ ॥'

अथ कुमारोऽपि जिनेश्वरं नमस्कृत्य समायान्तं मुनिं नमश्चक्रे। ततो मुनिः कुमारं प्रति प्राह—'वत्स! भवता किं कुलं सफलीकृतम्? त्वचाम्ना का वर्णपरम्परा वर्ण्या। केन कारणेनात्र भवदागमनोत्सवो बभूव।' ततः कुमारः[1] सर्वं कथयामास। अत्रान्तरे जटाभारतिरोहितां तां कन्यां कुमारोऽद्राक्षीत्। ततः कुमारेण मुनिः पृष्टः—'इदं[1] जिनमन्दिरं केन कारितम्? अत्राटव्यां किं यूयम्? इयं का कन्या? एतत् सर्वं मम कथ्यताम्। अथ मुनिः प्राह—'वत्स! इयमस्माकं कथा महती वर्तते। प्रथमं देवपूजां कुर्मः। तावत्क्षणं प्रतीक्षताम्' इत्युक्त्वा मध्ये गत्वा मुनिर्देवपूजां व्यधात्। सा कुमारं विलोकयामास। कुमारस्तां विलोकितवान्। ततो मुनिः कमलैर्देवपूजां कृत्वा मण्डप आगत्य कनकरथकुमारमब्रवीत्—'कुमार! आगम्यतामिहासन्ने ममोटजे यतो भवतः पूजा विधीयते।' ततस्तस्योपरोधादुटजे गतः कुमारः। मुनिरूचे—"वत्स! श्रूयतां चैत्यस्य मम च अस्याः कन्यायाश्च कथा—

'अत्रैव भरते अमरावती नाम्नी नगरी वर्तते। तत्र हरिषेणो नाम राजा। तस्य प्रियदर्शना नाम्नी राज्ञी बभूव। तयोर्जितसेनो नाम कुमारः। अन्यदा कश्चिद्विपरीतशिक्षाशिक्षितोऽश्वो नरेश्वरं हरिषेणं जहार। अत्रैव भवन आगत्य मुक्तो राजा क्रमेण वनमध्ये परिभ्रमन् अस्मिन् आश्रमे समागतः। तत्र कच्छमहाकच्छवंशोत्पन्नं विश्वभूतिनामानं कुलपतिं नमश्चक्रे। मुनिना 'राजायम्' इति लक्षणैर्विज्ञाय

---

१. The portion beginning with कुमारः and ending with इदं is missing in *Z*.

आशीर्दत्ता, उक्तश्च—'कुतो यूयमिहागताः ? कथं वैकाकिनः ?' ततो मुनिनैवं पृष्टो राजा सर्वं निवेदयामास। इतश्च राज्ञः पृष्ठे सैन्यं समागतम्। राजानं दृष्ट्वा प्रमोदं प्राप सैन्यम्। ततश्चाश्रमबाह्ये सैन्यस्यावासा जाताः। राजा मुनीनाराधयन् तत्राश्रमे मासमेकं स्थितः। तेनेदं नाभेयमन्दिरं कारितम्। अथ गच्छते हरिषेणराज्ञे मुनिर्विषापहारमन्त्रं ददौ। ततो राजाऽऽत्मनगरीं गतः। लोकैर्महतोत्सवेन नगरमध्ये प्रवेशः कृतः। राजा राज्यं परिपालयति। अन्यदाऽस्य राज्ञः सभायामुपविष्टस्य पुमानेको व्यजिज्ञपत्—'देव ! मङ्गलावती नाम्नी नगरी अस्ति। तत्र प्रियदर्शनो नाम राजा राज्यं करोति। तस्य विद्युत्प्रभा नाम्नी राज्ञी वर्तते। तयोः प्रीतिमती नाम्नी कन्या। सा सर्पेण दष्टा। अस्माकं स्वामिना इति निवेदयितुमहं प्रेषितः।' राजा तस्य वचनं श्रुत्वा वेगिभिः करभैस्तत्र गत्वा तेनैव विषापहारमन्त्रेण तां निर्विषीचकार। ततस्तां पित्रा दत्तां परिणीय पुनर्निजनगरीं समागतो हरिषेणराजा। ततो भोगान् भुक्त्वा कियति काले गते तया नवपरिणीतया सह पुत्रे राज्यभारं निवेश्य तपस्वितां[1] भेजे। विश्वभूतेः कुलपतेराश्रमं गतौ। तत्र राजाराज्ञ्यौ तपश्चक्रतुः। अथ प्रीतिमत्यास्तपः कुर्वत्याः पूर्वसम्भवो गर्भः पञ्चमे मासे प्रकटीबभूव। तां तथास्थां दृष्ट्वा तपस्विनः सर्वेऽपि लज्जिताः। ततो हरिषेणराज्ञा पृष्टा—'देवि ! किमेतत् ?' राज्ञी प्राह—'स्वामिन् पूर्वसम्भवो गर्भः। तदा मया व्रतविघ्नभयेन न कथितो युष्माकम्।' इतश्चाग्रेतनीयाः सर्वेऽपि तपस्विनस्तमाश्रमं विमुच्यान्यत्र गताः। हरिषेणस्तपस्वी तस्मिन्नेवाश्रमे स्थितः। ततो द्वावप्यतिदुःखिनौ निजकर्म निन्दन्तौ चतुरो मासानत्यवाहयताम्। सा प्रीतिमती राज्ञी सम्पूर्णे नवमे मासे पुत्रीमसूत। ऋषीणामाश्रमे जाता इयं पुत्रीति कारणात् पितृभ्यां तस्या ऋषिदत्तेति नाम कृतम्। ततो दैवयोगात् प्रसवरोगेण तस्या जननी प्रीतिमती पञ्चत्वं प्राप। तत और्ध्वदेहिकं कृत्वा लालयित्वाऽष्टवार्षिकामकरोत् पिता इमाम्। मम पुत्रीं रूपवतीं दृष्ट्वा वनेचरा हरिष्यन्ति इति चिन्तयित्वा तस्या योजनकाञ्जनं[2] चकार। अदृशीकरणाञ्जनं[3] पूर्वं विश्वभूतिकुलपतिना निवेदितम्।

१. पश्चितां for तपस्वितां A. २. तस्यार्थो जिनकोजनं for तस्या योजनकाञ्जनं Z. ३. अदृशीकरणं जनं for अदृशीकरणाञ्जनं Z.

तेन कारणेनास्मिन् वने सा पुत्री वनेचराणामगोचरा बभूव। 'कुमार! सुभगाकार! अयं सोऽहम्। सेयं मम कन्यका।' कुमारस्तामृषिपुत्रीं स्नेहपरम्परया दृशा तथाऽपश्यत् यथाऽन्योन्यमात्मा एकीभूतः। मुनिरपि एतयोरभिप्रायं निजचित्ते विभाव्य स्मित्वा कुमारमुवाच—'कुमार! मया तुभ्यमियं पुत्री दत्ता।' कुमारेणोक्तम्—'यत्पूज्याः समादिशन्ति मया तत्प्रतिपन्नम्।' मुनिनोक्तम्—'कुमार! उत्तिष्ठ! त्वं कटकं गच्छ, भोजनं कुरु।' कुमारोऽपि मुनिं प्राह—'प्रभो! अद्य युष्माभिः समं भोक्ष्यामि तन्मया सह चलत।' मुनिनोक्तम्—'वत्स! तव गौरवं प्रमाणम्। परं मुनीनां कन्दमूलादि भुक्ताऽन्यन्न कल्पते' इत्युक्त्वा मुनिना विसृष्टः कुमारः कटके गत्वा सपरिच्छदो भोजनं चकार। अथ शुभे लग्ने कुमारेण सा हरिषेणपुत्री ऋषिदत्ता परिणीता। ततः कुमारस्य तया नवोढया सह तत्रैव वसतः कियन्तो वासरा गताः। अन्यदा मुनिः कुमारं गद्गदया गिराऽब्रवीत्—'कुमार! जगदाधार! वयं त्वां बहु किं ब्रूमहे। एनामपमानपदं कदापि मा कृथाः। इयं वनवसनात् कौशल्ये कृशा त्वयि न्यासीकृता मया। तव सङ्गमेनैषाऽपि गुणवती भविष्यति। यतः मृगनाभौ गता धूलिरपि सुरभीभवेत्। किञ्चाहमग्नौ प्रवेष्टुं वाञ्छामि। यतो मादृशां जीवितान्मरणं श्रेयः।' कुमारोऽपि मुनेः पादयोर्निपत्य मुनीश्वरं प्राह—'प्राणपरित्यागवार्तयाप्यलम्।' ततः क्रन्दन्ती ऋषिदत्ता निजपितरं प्रति प्राह—'मयि करुणां कुरुत।' मुनिरुवाच—'वत्से! एवं मा ब्रूहि। परं मम शिक्षां शृणु, गुरून् शुश्रूषेथाः, शीलं पालयेथाः। सपत्नीष्वपि मा कोपीः। सुखे दुःखे चाधर्मपराङ्मुखी। ततश्च कनकरथकुमारं स्वामपि पुत्रीं मुत्कलाप्य पञ्चपरमेष्ठिमन्त्रं स्मरन् मुनिरग्नौ विवेश। ऋषिदत्तापि रुदती जगतीपीठे विलुठ्य इति विलापानकरोत्—

'हा तात! तात! निस्सीमापत्यवात्सल्यतत्पर!
अद्याहं त्वदृते शोच्या गतमूलेव कन्दली ॥ ४ ॥
दृष्टापि न मया माता तात! मातासि मे भवान्।
तदुभावप्यजायेतां भुवि हस्तौ गते त्वयि ॥ ५ ॥'

ततः कनकरथकुमारो निजप्रियां बोधयितुं प्राह—

'तिष्ठ तिष्ठ प्रिये ! माश्रुपातमत्यन्तमातनु ।
किं बलं ते कृते दुःखे, परलोकपथं गताः ॥ ६ ॥

देवि ! अयं तव पिता न शोच्यः, यतः कृतराज्यः कृतव्रतः ।' इत्थं तस्यौर्ध्वदेहिककार्यं कृत्वा कुमारः श्मशानस्थाने स्थण्डिलं चकार । अथ ऋषिदत्तया पत्न्या सार्द्धं कुमारोऽपि निजनगरं प्रति चलितः । ततः पत्न्या सह यान्ती ऋषिदत्ता पित्रा दत्तां सदाफलवृक्षफलावलीं मार्गेऽवपत् । अथाखण्डितप्रयाणैः कुमारो रथमर्दनं महतोत्सवेन विवेश । ततः सकलत्रः कनकरथकुमारः पित्रोश्चरणौ ननाम । ततः पितृभ्यामभिनन्दितः कनकरथकुमारस्तया सह विषयसुखमभुङ्क्त । इतश्च कावेरीस्वामिना सुरसुन्दरराज्ञा 'कुमारेण पुत्री मुनेः परिणीता' अयं वृत्तान्तः श्रुतः । सापि नृपपुत्री रुक्मिणी कुमाराकाङ्क्षिणी दुःखिनी जाता । अथान्यदा तस्या रुक्मिण्याः सुलसा नाम्नी योगिनी मिलिता । परं सा समस्तमन्त्रतन्त्रादिवेदिनी । तया रुक्मिण्या ऋषिदत्ताकलङ्काय कुमारागमनहेतवे भोजनवस्त्रादिभिः सा चावर्जिता । रुक्मिणी तां दुष्टां सुलसां रथमर्दनपुरे प्राहिणोत् । ततः सा सुलसा कियद्दिवसै रथमर्दनपुरे समागता । ततश्च रात्रिसमये कनकरथकुमारधवलगृहे गता । सर्वेषां जनानामवस्वापिनीं दत्त्वा कुमारस्य समीपे ऋषिदत्तां सुप्तां दृष्ट्वा निजमस्तकं धुन्वती सुलसा निजचित्ते इति चिन्तयति—

'अहो रूपमहो दृष्टिरेतस्या मृगचक्षुषः ।
अयं च पुण्यवान् यस्य दयितेयमजायत ॥७॥'

अथ तया योगिन्या ऋषिदत्तामुखं रुधिरेण विलिप्तम् । उच्छीर्षके किञ्चिदामिषं न्यस्तम् । एकं नरं मारयित्वा कुमारधवलगृहात् पलायिता । ततः प्रभातकाले मारितं नरमालोक्य कलकलश्चक्रे परिवारेण । कलकलं श्रुत्वा कुमारेण चिन्तितम्—'हा हा ! अद्य कश्चिन्नरो मारितः श्रूयते, तत्कथमेषा मम दयिता राक्षसी ।' ततो रुधिरेण विलिप्तमुखी ऋषिदत्तामुच्छीर्षकोपरि न्यस्तमामिषं दृष्ट्वा कुमारेण चिन्तितम्—'अहो यत् शास्त्रे रूपलक्ष्मीरपायबहुला तत्सत्यम्' इति बहून् संकल्पविकल्पान् चिन्तयन् तत्कालमेव प्रियां

१. दीप्ति॰ for दृष्टि॰ *Z*.

प्राबोधयत्—'देवि ! जागृहि, जागृहि ।' ततः सुप्तोत्थितां स्ववल्लभां प्रोवाच—'देवि ! भवतीं किञ्चित्पृच्छामि । हरिषेणकुले उत्पन्नापि किं त्वं राक्षसी भवसि ?' साऽपि भीताऽभणत्—'देव ! मय्येवं किं जल्पसि ?' कुमारः प्राह—'प्रिये ! अद्य रात्रौ पुरुषो मारितः । तवोच्छीर्षके मांसं न्यस्तम् । मुखं रुधिरेण विलिप्तम् । एतद् द्वयं मया प्रत्यक्षं दृष्टम्' इति पत्युर्वचनं श्रुत्वा स्वयं तद् दृष्ट्वा श्रुषिदत्ता कुमारं प्रत्यभाषत—'देव ! यदि पुरापि मांसभोजनीभवामि ततो मांसनिषेधं कथं कुर्याम् ? एतत्किमप्यहं न जानामि । केनापि विद्वेषिणा मम कर्मप्रेरितेनैतत् कृतम् । अथवा यदि तव काप्यप्रीतिस्ततो मां निगृहाण ।' कुमार इति वचनं श्रुत्वा तामवोचत्—'प्रिये ! त्वं निर्दोषा । चित्ते खेदं मा कुरु ।' कुमार इति वदन् स्वयमेव मांसं निराकृत्य तस्या मुखाम्बुजं प्रक्षालयामास । एवं कलङ्कं सा योगिनी नित्यमेव तस्याश्चक्रे । कुमारेणापि स्नेहपरेण नित्यं कलङ्कोऽपलपितः । अन्यदा हेमरथो राजाऽमात्यान् इत्यभाषिष्ट—'रे रे मम पुरे नित्यमेकैको जनो मार्यते । यूयं किमु न जानीथ ।' तैरुक्तम्—'देव ! एतन्मानवीचरित्रं न, अपरं किञ्चिद्द्वयं न जानीमः ।' राज्ञा कोपाविष्टेनोक्तम्—'तर्ह्येते पाषण्डिनो नगरान्निर्वास्यन्तां यदेते किञ्चिदपि न जानन्ति ।' ततो राजादेशाज्जैनमुनीन् मुक्त्वा सर्वे पाषण्डिनो निष्कासिताः । इतश्च तस्मिन्नवसरे सुलसा योगिनी राजसभायामागत्य राजानमिदं व्यजिज्ञपत्—"देव ! मयाद्य रात्रौ स्वप्नो दृष्टो यत्केनापि देवेन मां प्रत्युक्तम्—'यत् प्रभाते सर्वान् पाषण्डिनो निष्कासयिष्यति ( राजा ),' ततो भवत्या गत्वा राज्ञोऽग्रे निवेदनीयं यत्—'तव कुमारस्य वनादानीता वधूर्निश्चितं राक्षसी । तस्या एवंदृशं चेष्टितम् । पाषण्डिनां पराभवं मा कुरु । यतः शूकर इक्षून् खादति कुध्यते महिषाननम् ।' राजन् ! यदि मदीये वचसि तव सन्देहो भवति तदद्य रात्रौ स्वयं गत्वा विलोकय ।" राज्ञोक्तम्—'हुं विलोकयिष्यामि ।' इत्युक्त्वा योगिनीं विसर्जयित्वा रात्रौ कनकरथकुमारं स्वाङ्गपीडाकपटाद् आत्मसमीपे अशाययत् । कुमारश्चिन्तापरो रात्रौ पितुः समीपे सुप्त इति चिन्तां करोति—'हा अद्य

१. न गृहाण for निगृहाण Z.

प्रियाकलङ्कः प्रकटो भविष्यति। यत एकतः पितुरादेशलङ्घनं न युज्यते, अन्यतो दयिता दूषिता। इतो व्याघ्र इतस्तटी।' इतश्च सुलसया तस्यां रात्रौ तथैव ऋषिदत्तामुखं रुधिरेण विलिप्तम्, उच्छीर्षे आमिषं मुक्तम्। हेमरथराज्ञा चरान् प्रेषयित्वा तत्स्वरूपं विलोकितम्। अथ प्रभाते तत्स्वरूपं चरै राज्ञोऽग्रे निवेदितम्। ततो हेमरथराज्ञा कुपितेन कुमारस्याग्र उक्तम्—अरे! क्रूरचरितामेनां राक्षसीं जानन्नपि कथं पालयसि? याहि याहि—'अरे! राक्षसीपते! मम दिशोऽग्रं त्यज। अद्य त्वया निर्मलं कुलं कलङ्कितम्।' ततः कुमारोऽप्यञ्जलिं योजयित्वा नृपं विज्ञपयामास। 'देव! इदं सर्वमलीकं मम विषये। प्रसीद! कोपं मा कुरु।' अथ राजा प्राह—'अरे त्वं स्वयं गत्वा निभालय। ततश्च कुमारोऽपि दुःखितो निजगृहे गतः। वामकरतले न्यस्तकपोलां रुदतीं प्रियां दृष्ट्वा कुमारेणोक्तम्—'देवि! अश्रुधाराभिर्जलवर्षणं किं कुरुषे? किं कुर्मः? कल्पेतनीये दिवसे नृपस्याग्रे योगिनी त्वां राक्षसीं न्यवेदयत्। अद्य प्रभाते राज्ञा चरान् प्रेष्य त्वमीदृशी दृष्टा। अधुना तव यद्भविष्यति तद् वयं न जानीमः।' अत्रान्तरे हेमरथो राजा तां केशैराकृष्य विलपन्तीं दण्डपाशिकानामर्पयामास। तानेवमादिदेश—'एनां पापिनीं राक्षसीं नगरे भ्रामयित्वा श्मशानमध्ये नीत्वाऽनवलम्बं मारयत।' कनकरथकुमारोऽपि स्वाङ्गघातं कुर्वन् राज्ञा स्वयमेव बद्ध्वा निषिद्धः। अथ सप्तशिखाबद्धश्रीफलां निम्बपत्रमालाक्रान्तकण्ठाम् उद्दण्डविधृतछित्वरछत्रां जीर्णसम्मार्जनीखण्डशेखराम् अग्रेसञ्चारिविस्वरकाहलाश्रृङ्गिडिण्डिमां मिलितनीचलोकपातितबुंबिकाचूर्णचित्रितनिश्शेषशरीरां दण्डपाशिका राजादेशादेवंविधामृषिदत्तां नगरमध्ये भ्रामयामासुः। ततः पौरेषु हाहाकारं कुर्वत्सु दण्डपाशिकाः श्मशानमध्ये तां नयन्ति स्म। तस्मिन्नवसरे सूर्योऽप्यस्तमितस्तस्या दुःस्थां कष्टां दशां विलोकयितुमनीश्वर इव। ततोऽन्धकारं सर्वतः परितस्तरे। इतश्च तेषां मध्यात् खड्गं गृहीत्वा एकेन ऋषिदत्तां प्रत्युक्तम्—'अरे क्रूरे! किञ्चिदीप्सितं दैवतं स्मर, एषा न भवसि' इत्युक्त्वा यावदयं खड्गमुद्भ्रामयति तावद् ऋषिदत्ता भयाद् भूमौ पपात मूर्च्छिता। ततो मृतावस्थामेनां दृष्ट्वा 'किमिदं मृतमारणम्' इत्युक्त्वा सर्वेऽपि दण्डपाशिका व्यावृत्य नगरे गताः। सापि सन्ध्यासमये शीते वाते शरीरे

ततो राजकुमारोऽपि मुनिं प्रत्यवोचत्—'मुने ! त्वां पश्यतो मम दृष्टिः कथं न तृप्यति ?' मुनिनोक्तम्—'देव ! कोऽपि कस्यापि वल्लभो भवति। कुमुदानि चन्द्रे मोदन्ते, कमलानि भास्करे।' ततः कुमारेणोक्तम्—'मुने ! मयाग्रे गन्तव्यमस्ति। ततः कथं यामि यतस्त्वत्प्रीतिशृङ्खलाबद्धं मम मनो गन्तुं न शक्नोति। तन्मयैव समं चल। वल्लमानस्त्वामत्रैव मोदयामि।' अथ मुनिः प्राह—'कुमार ! आग्रहं मा कृथाः। यतो देव ! संयमिनां[1] राजसङ्गतिर्दोषाय जायते।' ततः कुमारः पुनर्मुनिं प्रति प्राह—'प्रभो ! किं भवादृशा अपि प्रार्थनाभङ्गं कुर्वते। अमात्योऽपि तं मुनिं प्राह—'मुने ! यदयं कुमारः कथयति तत्कुरु।' ऋषिदत्तामुनिः सर्वेषां महाऽऽग्रहेण तत्सर्वं मेने। इतश्च सूर्योऽस्तं गतः। तौ कुमारमुनी सन्ध्याविधिं[2] कृत्वा एकस्मिन् पल्यङ्के शायिनौ तां रात्रिमतिवाहयताम्। अथ प्रभाते कुमारः प्रयाणमकरोत्। ततोऽविच्छिन्नप्रयाणैः कावेरीं नगरीमभ्यागात्। ततः सुरसुन्दरो राजा सपरिवारस्तस्य सम्मुखमाजगाम। ततो महतोत्सवेन नगरीमध्ये प्रवेशमहोत्सवो बभूव। विवाहसज्जीकृतं धवलगृहं कुमारोऽलञ्चक्रे। अथ गणकोपदिष्टे दिवसे राजकुमारो रुक्मिणीं पर्यणैषीत्। अन्यदा कुमारस्योत्सङ्गे स्थिता रुक्मिणी कुमारं प्रति इति बभाषे—'प्राणेश ! सा तपस्विनी ऋषिदत्ता कीदृश्यासीद् यया तव चित्तं वशीकृतम्।' ततः कुमारो जगाद—'तस्या ऋषिदत्ताया एकैकं किं वर्ण्यते यस्या रूपस्याग्रे कामभार्या दासी वर्तते, मेनका यस्या वर्णिका, नागयोषितो यस्याः पद्रेणवः। दैवयोगान्मम तस्या विरहे जाते त्वमपि प्रिया आसीः, यत्क्षीरं विना वृष्टिरपि प्रीतिकरी भवति।' ततः सकोपा रुक्मिणी पूर्वकारितं निजं पौरुषं कुमारस्याग्रे कथयामास। तस्मिन् क्षणे ऋषिदत्तामुनिर्निजकलङ्कापनयनाद् हृदये मुदं दध्रे। अथ कुमार इति श्रुत्वा भृकुटीभङ्गभीषणो रुक्मिणीं निजोत्सङ्गादपाकृत्यात्यर्थं निरभर्त्सयत्—'अरे पापीयसि ! क्रूरे ! भवत्याऽऽत्माऽहञ्च नरके क्षिप्तौ। हा हा ! गुणवती रूपवती याऽऽसीत् महासती कथाशेषीकृता, साऽपि गता। अशुभकारिण्या त्वयाऽऽत्महितं कुर्वत्या लोकविरुद्धं किं कृतम्' इति

---

१. Z. adds राजसंगामिनां after संयमिनां। २. ०विधि for ०विधं Z.

निर्भर्त्सयतस्तस्य प्रभातं जातम्। अथ कुमारो भार्याविरहविह्वलस्तत्रैव चितां कारयामास। कुमारः स्वजनैर्वार्यमाणोऽपि चितामधिरोढुं चलितः। ततः कावेरीपतिना, वेगेन समागत्य कुमारो वारितः। 'कुमार! त्वादृशामिदमबलाकर्म न युज्यते।' राज्ञा इत्युक्तोऽपि कुमारो यावदाग्रहं न मुञ्चति ततश्च परिवारजन ऋषिदत्तामुनिमवोचत्—'भगवन् अयं राजकुमारस्तव कथितं करोति। तत एनं मारणान्निवर्तय।' मुनिस्तैः परिजनैरभ्यर्थितो विहस्य कुमारं प्रति प्राह—'कुमार! महिलामात्रकृते किं म्रियते? मां वनादानयता त्वया यत् प्रतिश्रुतं तत्कथितं तव विस्मृतम्। किञ्च वल्लभासङ्गवार्ताऽपि तव दुर्लभा। जीवतः पुनरागत्य सा कुतोऽपि मिलिष्यति।' कुमारोऽपि मुनिं प्राह—'मुने! मां किं विप्लावयसि? किं कुत्रापि मृतस्य जीवितं जायते?' मुनिः प्राह—'वचनं कुरु, अनेन तव सत्त्वेन ऋषिदत्ता मृतापि जीविष्यति।' अथ कुमारो मुनिमभाषिष्ट—'प्रभो! पुनरप्येतदेव त्वरितं श्रावय—त्वया सा किं प्रत्यक्षं क्वापि दृष्टा, अथवा किं श्रुता, अथवा किं ज्ञानेन जीवन्तीं क्वापि स्थितां जानासि यतस्त्वमेवं सावष्टम्भं जल्पसि?' पुनर्मुनिर्जगाद—'कुमार! ज्ञानेन तव वल्लभां जानामि। यथा मां पश्यसि तथा दक्षिणदिक्पतेर्नगरे तव वल्लभाऽस्ति। ततोऽहं तस्याः पदे आत्मानं यमस्य पार्श्वे प्रस्थाप्य तव मित्रस्य कार्ये तामृषिदत्तामानयिष्यामि। अथ कुमारः प्राह—'मुने! यद्येवमस्ति ततो विलम्बो न युज्यते।' मुनिः प्राह—'दक्षिणयानं ध्यानेन क्षणं न भवति, शीतमेव मुधा पतेत्।' कुमारः प्राह—'तुभ्यमग्रेऽपि चित्तं मयाऽर्पितं साम्प्रतमयं ममात्मापि तावकः।' मुनिः प्राह—'कुमार! तवात्मा तव पार्श्वेऽस्तु, यदाऽहं यत्किञ्चित्प्रार्थयामि तत्त्वया मम दातव्यम्।' कुमारेणोक्तम्—'एवमस्तु' इत्युक्त्वा मुनिः पटान्तरितो बभूव। क्षणान्तरं तत्र स्थित्वा द्वितीयया औषध्या मुनित्वं त्यक्त्वा पटमध्याद् हरिषेणपुत्री ऋषीदत्ता प्रकटीबभूव। ततश्च देवगणेन तस्याः शिरसि कुसुमवृष्टिः कृता। लोकस्तां दृष्ट्वा परस्परमित्युवाच, 'यादृशी सुवर्णस्याग्रे किल पित्तला ऋषिदत्तायाः अग्रे

१. ऋषभ० for ऋषि० Z. २. किं दक्षिणया विना ध्यानदक्षिणे A. दक्षिणया वनाध्यांनषणे Z. ३. ०स्त्वां for स्तां Z. ४. या is missing in Z.

तादृशी रुक्मिणी भवेत्। ततः कनकरथकुमारस्य स्थाने आग्रहः। अस्याः कृते को न म्रियेत? कुमारोऽपि चिरदृष्टामृषिदत्तां प्रियां विलोकयन्नपि तृप्तिं न प्राप। सुरसुन्दरोऽपि तामालोक्यातिसहर्षो जातः। ततः सुरसुन्दरो राजा कुमारसहितामृषिदत्तां गजेन्द्रेऽधिरोप्य निजधवल-गृहे निनाय। ततो गौरवात्स्नानवस्त्रालङ्करणादिकैः तां सच्चकार। ततः सुरसुन्दरो राजा तां पापिनीं सुलसां योगिनीं नगरे भ्रामयित्वा पदे पदे पौरलोकैर्निन्द्यमानां पदे लोकैर्यष्टिमुष्ट्यादिभिः कुट्यमानां गर्दभारोपितां वाद्यमानकाहलडिण्डिमां विलूनकर्णयुगलनासिकां निजनगरान्निष्कासयन् निजपुत्रीमेकान्ते कृत्वाऽत्यन्तं निरभर्त्सयत्। कनकरथकुमारोऽपि ऋषिदत्तया सह सुखह्रदे मग्नः कियत्कालं श्वशुरेण प्रसादितः स्थितः। अन्यदोत्सङ्गनिषेदुषीं प्रियामृषिदत्तां कुमार एवमुवाच—'प्रिये! सर्वं भव्यमभूत्। परं मम मित्रं मुनिर्यमस्य समीपे कष्टेन विद्यते।' ऋषिदत्ता हसित्वा प्राह—'देव! विषादं मा कुरु। इदं सर्वमौषधीचेष्टितम्। किञ्चिन्मम वरं पूर्वप्रतिपन्नं देहि।' कुमारेणोक्तम्—'तर्हि किं दीयताम्?' ऋषिदत्ता प्राह—'यथा मां पश्यसि तथा रुक्मिणीमपि पश्य' इति श्रुत्वा कुमारेण चिन्तितम्—'विरोधिन्यामप्यस्यां कीदृशी चित्तवृत्तिः' इति चिन्तयित्वा दयितामुवाच कुमारः। 'देवि! एवमस्तु' इति भर्तृवचनं श्रुत्वा ऋषिदत्ताऽऽत्मनाऽऽकार्य रुक्मिणीं लज्जाभङ्गमकारयत्। अथ कुमारोऽपि कावेरीपतिं मुत्कलाप्य ताभ्यां दयिताभ्यां सहितो निजं नगरमाजगाम। अथ हेमरथो निजपुत्रं प्रत्यभ्याजगाम। निजतात-मायान्तं विलोक्य कुमारो ननाम। ततो नगरमध्ये प्रवेशो बभूव। ततो वृत्तान्तं ज्ञात्वा हेमरथो निजापराधेन लज्जित ऋषिदत्तामममा-नयत्। क्रमात्कनकरथं राज्ये निवेश्य भद्राचार्यसमीपे हेमरथो दीक्षां जग्राह। अथ न्यायेन पृथ्वीं पालयन् कनकरथो राजा ऋषिदत्तायां सिंहरथनामानं पुत्रमजीजनत्। अन्यदा ऋषिदत्तासहितो राजा गवाक्ष उपविष्टो मेघपटलमद्राक्षीत्। ततः प्रचण्डपवनवशात्क्षणेन विलीनं ततश्च मिलितं गलितं दृष्ट्वा मेघवृन्दं वैराग्यवान् राजा इदं चिन्तयामास—'यादृगेदं दृष्टनष्टं मेघवृन्दम् अस्मिन् संसारे आयुर्विभवादिकं

तादृगेव चलाचलम्' इति वैराग्यपुरस्सरमृषिदत्तासहितस्य प्रभाते आरामिकेन राज्ञोऽग्रे इति विज्ञप्तम्—'देव! कुसुमाकरे उद्याने भद्रयशा नामाचार्यः सपरिवारः समवासरत्' इति राजा श्रुत्वा तस्मै पश्चाङ्गप्रसादं कृत्वा गुरून् वन्दितुं चचाल। गुरून् वन्दित्वा ऋषिदत्तासहितो धर्मं शृणोति देशनाप्रान्ते। ऋषिदत्ता प्राह—'भगवन्! पूर्वभवे मया किं कर्म विहितं यन्ममालीको राक्षसीकलङ्को बभूव।' गुरुः प्राह—

"अस्मिन् भरते गङ्गापुरं नाम नगरम्। तत्र गङ्गादत्तो राजा। तस्य गङ्गा नाम्नी राज्ञी। तयोर्गङ्गासेना पुत्री। तत्रैव पुरे चन्द्रयशा नाम्नी प्रवर्तिनी। तस्याः समीपे गङ्गासेना धर्मं शृणोति। ततः कियति काले गते चन्द्रयशासमीपे तया विषया विषसदृशा अवगणिताः। ततश्च तत्रैव पुरे काचित् सङ्गा नाम्नी श्राविका मासक्षपणतपः करोति। ततो लोकस्तां नमस्करोति। एवं दृष्ट्वा तस्याः प्रशंसां गङ्गासेना न सहते। अन्यदा लोकसमक्षं गङ्गासेनया तस्याः श्राविकाया अयं कलङ्को दत्तः—'यदेषा राक्षसी रात्रौ मृतकामिषं न खादति, दिवा तपस्तपति। एवं कलङ्कं श्रुत्वा सा सङ्गा तितिक्षामास। पुनर्मिथ्यादुष्कृतं न दत्तम्। तस्य कर्मणो वशाद् गङ्गासेना बहून् भवान् परिभ्राम्य पुनर्गङ्गापुरे राजपुत्री जाता। ततः पुनश्चारित्रं गृहीत्वा कोपं कृत्वाऽन्तकाले कोपमनालोच्य मृत्वा ईशानेन्द्रस्य कलत्रं जातम्। ततश्च्युत्वा हरिषेणमुनेः पुत्री प्रीतिमती कुक्षिसम्भवाऽऽश्रमे ऋषिदत्ता जाता। भद्रे! पूर्वकर्मवशाद् तवायं महान् कलङ्को बभूव" इति गुरुमुखात्पूर्वभवं श्रुत्वा ऋषिदत्ता जातिस्मरणं प्राप। तच्छ्रुत्वा कनकरथोऽपि वैराग्यं प्राप। अथ सिंहरथनामानं पुत्रं राज्ये निवेश्य भद्रयशाचार्यसमीपे द्वाभ्यां दीक्षा गृहीता। उग्रं तपः कुरुतः। द्वावपि केवलज्ञानं प्रापतुः।

गतवति विततायुःकर्मणि प्रान्तैमन्तःकरणशरणवैरिध्वंसनादत्तकीर्तिः।
अथ पृथुमथितार्पेत केवलद्वन्द्वमेतत् परमपदमुदारानन्दसन्दोहमूहे ॥ १ ॥

इति शीलविषये ऋषिदत्ताकथानकम् ॥

---

१. ॰सहि॰ is missing in Z. २. गति॰ for गत॰ Z. ३. प्रान्ति for प्रान्त Z. ४. पृथुमपिता यत् A., पृथुमपितापत् Z.

## जीवदयाविषये मेतार्यकथानकम् ।

अत्रैव भरते साकेतपुरे चन्द्रावतंसको राजा। तस्य सुदर्शना-प्रियदर्शनानाम्न्यौ द्वे राज्ञ्यौ। सागरचन्द्रमुनिचन्द्रनामानौ सुदर्शना-पुत्रौ। गुणचन्द्रबालचन्द्रनामानौ प्रियदर्शनापुत्रौ। चन्द्रावतंसकराज्ञा सागरचन्द्रो युवराजपदे कृतः। मुनिचन्द्रस्य कुमारभुक्त्यै उज्जयिन्या राज्यं दत्तम्। अन्यदा माघमासे शयनगृहे चन्द्रावतंसकराज्ञा प्रतिमा-कायोत्सर्गः कृतः। 'यावद्दीपो दीप्रस्तावत्कायोत्सर्गं न पारयामि,' अयमभिग्रहो गृहीतः। ततश्च शय्यापालिकया चतुर्षु प्रहरेषु दीप-स्तैलेन सिक्तः। दिनोदये सुकुमारतया राजा मृतः, गतो देवलोकम्। तस्य पट्टे सागरचन्द्रो राज्यं करोति। अन्यदा सपत्नीमाता प्रिय-दर्शना सागरचन्द्रराज्ञा उक्ता—'तव पुत्रयो राज्यं भवतु। अहं दीक्षां ग्रहीष्यामि।' तया चिन्तितम्—'राज्यमनेन सागरचन्द्रेणैव निर्वहति, अन्येन न निर्वहति।' इति कारणान्न गृहीतं राज्यम्। बहवो दिवसा गताः। अन्यदा राज्यलक्ष्म्याऽलङ्कृतो वसन्तक्रीडायां गच्छन् प्रिय-दर्शनया सागरचन्द्रो दृष्टः। ततः स्त्रीस्वभावात् सागरचन्द्रविषये कोपो बभूव। प्रियदर्शना चिन्तयति—'तदा मया निजपुत्रयोर्दीयमानं राज्यं नाभिलषितम्, साम्प्रतं यदि कथमपि मम पुत्रयो राज्यं भवति ततो रम्यम्, ततः केनाप्युपायेन सागरचन्द्रं मारयामि।' अन्यदा बाह्योद्याने स्थितेन सागरचन्द्रेण निजलघुभ्रातृसहितेन शीताशनार्थं मोदकानयनाय सूपकारसमीपे एका दासी प्रहिता। प्रियदर्शनया पृष्टा—'किमर्थमागता त्वम्?' तयोक्तम्—'राज्ञः शीताशनार्थमागता।' अत्रान्तरे प्रियदर्शना राज्ञी हस्तौ विषालिप्तौ कृत्वा मार्गे स्थिता। इतश्च सा दासी सिंहकेसरमोदकमेकमेव गृहीत्वा गच्छन्ती प्रिय-दर्शनया दृष्टा। विलोकनमिषेण मोदको निजकरे गृहीतः। ततो हस्ताभ्यां घृष्टः। ततो विषभावनालग्नः पुनर्दासीहस्ते समर्पितः। दास्या सागरचन्द्रराज्ञः समर्पितो मोदकः। राज्ञा चिन्तितम्—'मोदक

---

१. स is missing in Z. २. The portion अन्येन न निर्वहति is missing in Z. ३. The portion हस्ताभ्यां घृष्टः is missing in Z.

एक एव । मम भ्रातरौ क्षुधितौ । तेषु बुभुक्षितेषु न युज्यते भोक्तुम् ।' तयोर्द्वयोरपि मोदकार्धं दत्तम् । ताभ्यां भक्षितश्च । ततो विषघूर्णमाननयनौ दृष्टौ । राज्ञा आकारिता वैद्याः । वैद्यैः कुमारसुवर्णं पायितौ । ततो राज्ञा दासी पृष्टा—'केनार्पितो मोदकः ?' तयोक्तम्—'सूपकारेणार्पितः । मम मार्गे आगच्छन्त्या प्रियदर्शनया मम हस्ताद् गृहीतो मोदकः, पश्चात्परामृष्टः ।' सागरचन्द्रराज्ञा चिन्तितम्—'अनया मम सपत्नीमात्रा मम विनाशाय विषेण मोदकः परिभाव्य प्रहितः ।' स्वरूपं ज्ञात्वा राजा चिन्तयति—'तदा दीयमानं राज्यं न गृहीतम् । अधुना ईदृक् स्वरूपम् ।' ततो वैराग्यपरेण सागरचन्द्रेण दीक्षा गृहीता । प्रियदर्शनापुत्रयो राज्यं दत्तम् । अन्यदा उज्जयिन्याः साधवः समागताः । सागरचन्द्रमुनिना पृष्टाः—'उज्जायिन्यामस्ति निरुपसर्गत्वम् ।' तैः कथितम्—'तत्र राजपुत्रः पुरोहितपुत्रश्च मुनीनामुपसर्गं कुरुतः ।' ततः सागरचन्द्रो मुनिर्निजबान्धवस्य पुत्रस्य स्वरूपं ज्ञात्वा उज्जयिन्यां गतः । कस्मिन्नपि गच्छे विश्रान्तः । तत्र[1] वास्तव्यमुनिभिर्भिक्षावेलायां निमन्त्रितः सागरचन्द्रो मुनिः । सागरचन्द्रमुनिनोक्तम्—'अहमात्मलब्धं पारयामि । परानीतमाहारं न गृह्णामि । ततो मम स्थापनाकुलानि दर्शयत ।' तत एकेन मुनिना पुरोहितगृहं दर्शितम् ।' तत्र गत्वा सागरचन्द्रमुनिना महता शब्देन धर्मलाभः कथितः । ततो हाहाकारं कुर्वन्त्योऽन्तःपुर्यो बहिर्निर्गताः । मुनिना गाढस्वरेण भणितम्—'श्राविके ! किमेतत् ?' इतश्च कलकलं श्रुत्वा तौ राजपुत्रपुरोहितपुत्रौ तत्रागतौ । द्वाभ्यां मुनिं दृष्ट्वा द्वारो दत्तः, कथितश्च—'भो मुने ! नृत्यं विधेहि ।' मुनिनोक्तम्—'वादित्रं विना कथं नृत्यं करोमि ? ततो युवां छन्दविशेषं वादित्रं वादयथ यथा भवतो नृत्याभिलाषं पूरयामि ।' ततो मुनिः पार्श्वे पात्रं विमुच्य नृत्यति । ततो मुनिनोक्तम्—'युवां सम्यक् वादित्रं वादयितुं न जानीतः ।' ततः कोपितो मेलः । ताभ्यां राजपुत्रपुरोहितपुत्राभ्यामुक्तम्—'आवयोर्युद्धकलाऽस्ति परं वादित्रकला नहि ।' मुनिनोक्तम्—'तर्हि मया समं युद्धं कुरुथ ।' ततस्ताभ्यां सह योद्धुं प्रवृत्तो मुनिः ।

---

१. The portion beginning with तत्र वास्तव्य and ending with दर्शितं is missing in Z.

ततो युद्धे पराजित्य मुनिस्तयोर्गात्रभङ्गं कृत्वा स्वयं द्वारमुद्घाट्य गतः। उद्याने गत्वा धर्मध्यानं कर्तुं प्रवृत्तः सागरचन्द्रो मुनिः। मुनिचन्द्रस्य श्रुतिर्जाता। सर्वत्र विलोकितोऽपि सागरचन्द्रमुनिर्न प्राप्तः। ततो मुनयः पृष्टाः। तैः कथितम्—'अद्यैकोऽतिथिः समागतोऽभूत्, परं क्वापि गतो न ज्ञायते, अद्योद्याने स्थितो दृष्टः।' तत्र गत्वा मुनिचन्द्र-राज्ञा उपालब्धो मुनिः। मुनिनोपालब्धो राजा—'राजन्! किं तवाप्येतन्मुनिजनावहेलनं युक्तम्।' लज्जितो राजा पुनः प्राह—'प्रभो! कुरुत प्रसादम्, मुञ्चत कुमारौ।' मुनिनोक्तम्—'यदि दीक्षां गृह्णीतस्तत एनौ मुञ्चामि।' राज्ञा तत्प्रतिपन्नम्। ततस्तौ स्वस्थीकृत्य द्वाभ्यामपि दीक्षा गृहीता। राजपुत्रो निजपितृव्यसागरचन्द्रसमीपे सम्यग् व्रतं पालयति। पुरोहितपुत्रो जुगुप्सापरो जातः। ततस्तौ मृत्वा देवलोके गतौ। तत्र द्वाभ्यां परस्परमिति प्रतिपन्नम्—'यः प्रथमं देवलोकाच्च्यवति तेन स बोद्धव्यः।' पुरोहितजीवो देव-लोकाच्च्युत्वा राजगृहे नगरे दुर्गञ्छाकर्मप्रभावेन मेवपत्नीकुक्षाववा-तरत्। इतश्च तस्या मेवपत्न्याः तत्रैव वास्तव्या श्रेष्ठिभार्या श्रेष्ठिनी सखी वर्तते। तया निजपुत्रः श्रेष्ठिन्या दत्तः। ततो नित्यं श्रेष्ठिनी तस्या मेवपत्न्याः पादयोः पातयति पुत्रं मेतार्यनामदत्तम्। क्रमेणैव मेतार्यो वृद्धिं प्राप्तः। रात्रौ देवलोकाद् देव आगत्य तं मेतार्यं बोध-यति, परं स न बुध्यते। इतश्च मेतार्यो नवयौवनालङ्कृतोऽष्टौ इभ्याः कन्याः परिणीय विमानारूढो निजगृहं आगच्छन्मेवेन दृष्टः। ततो मेवेन कथितम्—'यदि मम पुत्रो जीवति ततोऽहमपि कौतुकं पूरयामि। ततो देवप्रभावाधिष्ठितया मेवपत्न्या कथितं मेवस्याग्रे निजं सर्वं स्वरूपम्। 'अयं मम पुत्रः।' मेवेन निजपुत्रं श्रुत्वा विमानान्मेतार्यः पातितः। 'असमा-नजातीयानां पाणिग्रहणमुत्तमैर्जातीयैः सह न रम्यम्' इति भणित्वा निजगृहे गर्ते क्षिप्तः। द्वादशवर्षैर्देवस्तत्रागतः। देवेनोक्तम्—'मित्र! उपलक्षयसि माम्?' मेतार्येणोक्तं—'नाहमुपलक्षयामि त्वाम्।' ततो देवेन निजं रूपं प्रकटीकृत्योक्तम्—'अहं तव पूर्वभवमित्रम्, देवलोकादा-गत्याहं त्वां बोधयामि, परं त्वं न बुध्यसे।' एतत् सर्वं स्वरूपं मयैव तव कृतम्। मेतार्येणोक्तम्—'तथा कुरु यथाहं शुद्धो भवामि।' ततो देवेन छगलको दत्तः। स छगलको नित्यं रत्नानि व्युत्सृजति। मेता-र्यस्य पिता नित्यं तानि रत्नानि श्रेणिकराज्ञः समर्पयति। राज्ञा

पृष्टम्—'कथय तव किं ददामि ?' मेवेनोक्तम्—'मम पुत्रस्य निजपुत्रीं देहि ।' नित्यं रत्नानि ढौकयति । अन्यदाऽभयकुमारेण पृष्टो मेवः—तव गृहे कुतो रत्नानि ?' मेवेन कथितम्—'छगलो ददाति ।' ततोऽभयकुमारेण मेवसमीपे छगलको याचितः, मेवेनार्पितः । राज्ञा धवलगृहे समानीतः । ततो रत्नानि न व्युत्सृजति छगलकः । केवलं दुर्गन्धमेव व्युत्सृजति । ततो मेवस्य समर्पितः । तत्र मेवगृहे रत्नान्येव व्युत्सृजति । श्रेणिकराज्ञा चिन्तितम्—'देवप्रभावोऽयं छगलकः ।' अन्यदा देवपार्श्वाद् वैभारपर्वतमार्गो रथचङ्क्रमणयोग्यः कारितो राज्ञा । देवेन कृतः । पुनः सुवर्णप्राकारं याचितो देवः । देवेन सुवर्णप्राकारो रचितः । अन्यदा मेवस्याग्रे राज्ञोक्तम्—'समुद्रमत्रानय, यथा तव पुत्रः समुद्रमध्ये स्नानं कृत्वा शुद्धो भवति ।' देवेन तथा कृतम् । ततो राज्ञा निजपुत्री दत्ता मेवदत्ताय । पूर्वं या अष्टौ इभ्यकन्या मेवेन परिणीता अभूवन् ता अपि समागताः । ततो द्वादशवर्षाणि गृहवासे नवभार्याभिः सहितो विषयसुखं भुञ्जानः स्थितः । पुनर्देवेन प्रतिबोधितः । ततस्तस्य पार्श्वे मेतार्यभार्याभिर्द्वादशवर्षाणि याचितानि । तत एकोनपञ्चाशत् ४९ वर्षप्रान्ते मेतार्येण दीक्षा गृहीता । श्रीमहावीरेण दीक्षित एकल्लविहारप्रतिमया व्यचरत् । अन्यदा राजगृहे नगरे भिक्षार्थं गृहाद् गृहं परिभ्रमन् सुवर्णकारगृहे गतः । इतश्च सुवर्णकारो गुरुकार्थे सुवर्णयवान् पद्मोपरि मुक्त्वा गृहमध्ये गतः । ततश्च क्रौञ्चपक्षिणाऽकस्मादागत्य भ्रान्त्या सर्वेऽपि सुवर्णयवा भक्षिताः । सुवर्णकारो गृहाद्बहिरागतो यावद्विलोकयति तावन्न पश्यति यवान् । चिन्तितम्—'अनेनैव मुनिना गृहीता यवाः ।' ततो मुनिः[1] पृष्टः—'मुने ! यवास्त्वया गृहीताः ।' मुनिना जीवरक्षार्थं न कथितम् । ततः सुवर्णकारेण पृष्टो मुनिः—'यदि यवास्त्वया गृहीताः सन्ति तत् तान् समर्पय । अथवाऽन्येन केनापि गृहीताः । ततस्तं कथय ।' मुनिः कायोत्सर्गं कृत्वा मौनेन स्थितः । ततः कोपान्तरेण मुनेः शिरसि आर्द्रो वाध्रो वेष्टितः । मुनिः सर्वं सहते । परं यवभक्षिणं क्रौञ्चपक्षिणं न कथयति । ततश्च फाचरप्रहारेण मुनेर्नेत्रद्वयमग्रे पतितम् । शुक्लध्यानगतस्य मेतार्यस्य केवलज्ञानमुत्पन्नम् । अन्तगडकेवलज्ञानं प्राप्य मेतार्यमुनिर्मोक्षं जगाम । इतश्च तस्य

१. मुनेः for मुनिः Z.

सुवर्णकारस्य कर्मकरेण काष्ठभारः सहसैव मुक्तः । तस्य भयात् क्रौञ्चेन यवा मुक्ताः । तान् दृष्ट्वा सपरिवारेण सुवर्णकारेण दीक्षा गृहीता ।

इति जीवदयायां मेतार्यकथानकम् ॥

## नमस्कारविषये रत्नशिखकथानकम् ।

अन्ने वि इत्थ धम्मे रयणसिहाई विसुद्धजोगरया ।
कल्लाणभाइणो सव्व सिद्धाणेगे महासत्ता ॥ १ ॥

अत्रैव जम्बूद्वीपेऽस्मिन्नेव भरते शालिग्रामो नाम ग्रामः । तत्र स्वभावसरलः सङ्गतो नाम कौटुम्बिकः, परमतीव दारिद्र्यवान् । अन्यदा तेन मुनीनामात्मगृहे उपाश्रयो दत्तः । मुनिभिस्तस्य धर्मदेशना दत्ता—'अहो सङ्गत ! सर्वत्र पुष्पं फलति । यतः—

'धम्मेण रिद्धी धणयस्स तुल्ला धम्मेण कित्ती विमलाइ बुद्धी ।
पुत्ता विणीया दुहिया सुसीला संपज्जए सयणमणिच्छियं भो ॥ २ ॥,

कौटुम्बिकेनोक्तम्—'महात्मन् ! अस्मादृशां जनानां कुतो नाम धर्मो येषां सदैव दारिद्र्यम् ?' गुरुभिरुक्तम्—'भो महाभाग ! महामन्त्रं पठ ।' तेनोक्तम्—'को नमस्कारः ? किं भवति तेन पठितेन ?' गुरुभिरुक्तम्—'शृणु नमस्कारमाहात्म्यम्—

कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च ।
अमुं मन्त्रं समाराध्य तिर्यञ्चोऽपि दिवं गताः ॥ ३ ॥
ये याता येऽपि यास्यन्ति ये च यान्ति परं पदम् ।
तेऽपि सर्वे नमस्कारं स्मारं स्मारं दिवं गताः ॥ ४ ॥'

इति माहात्म्यं श्रुत्वा मुनिमुखात्तेन नमस्कारमन्त्रो गृहीतः । गुरुभिरुक्तम्—'त्वया नियमपूर्वं त्रिसन्ध्यमयं मन्त्रः स्मर्तव्यः ।' इत्युक्त्वा प्रभाते मुनिभिर्विहारः कृतः । सोऽपि त्रिसन्ध्यं नमस्कारं स्मरति विशुद्धमनाः । कियता कालेनायुःपर्यन्तं मृतः । अत्रैव भरते सन्दर्भदेशे नन्दिपुरे नगरे पद्माननो नाम राजा, तस्य कुमुदिनी नाम्नी राज्ञी. तस्याः कुक्षाववातरत् । स्वप्ने रत्नराशिर्दृष्टः । अतः कारणात्तस्मिन् जाते रत्नशिख इति नाम कृतम् । क्रमेण लाल्यमानः सर्वकलाकुशलो जातः । यौवनकालेऽपि पित्रा परिणायितः कोशल

राजपुत्रीं सुकोशां नाम्नीम् । अन्यदा पलितदर्शनाज्जातवैराग्येण पद्मानननराज्ञा रत्नशिखो राज्येऽभिषिक्तः । आत्मना राज्ञीसहितेन वनवास आश्रितः । रत्नशिखो राजा राज्यं करोति । परमस्य राज्ञः कथानकेषु महाप्रसादं ददाति। अन्यदा केनापि वीराङ्गदसुमित्रयोः कथानकं प्रारब्धम्—"शृणु राजन् ! अस्मिन्नेव भरते विजयपुरं नाम नगरम् । तत्र सुराङ्गदो नाम राजा । तस्य पुत्रो वीराङ्गदो नाम कुमारः । परं स कुमारोऽर्थिनामर्थस्य चिन्तामणिः, शरणागतानां वज्रपिञ्जरः, दीनदुःस्थितानां पितृगृहम् । तस्य कुमारस्य महामन्त्रि-पुत्रः सुमित्रनामा महामित्रं बभूव । अन्यदा सुमित्रेण सह कुमारस्यै-वंविध आलापो बभूव । कुमारेणोक्तम्—'भो मित्र ! देशान्तरे गम्यते। देशान्तरं विना निजपुण्यपरीक्षा कथं ज्ञायते ? अपूर्वविद्यागमः कुतः प्राप्यते ? तावन्निजकीयौ मातापितरावुक्त्वा देशान्तरं गमिष्यावः' इत्या-लोचयाञ्चक्रतुः । निर्गमोपायं चिन्तयन्तौ वर्तेते। अन्यदोद्यानभूमौ क्रीडां कुर्वतो राजकुमारस्य शरणमिति भणन् कृतवध्यमण्डनो भयभ्रान्तलोचनश्चौर एकः कुमारस्य चरणयोः पतितः। तावत्तस्य पृष्ठे धावन्तो दण्डपाशिकास्तत्र सम्प्राप्ताः । कुमारस्याग्र उक्तम्—'राजकुमार ! एष पापतस्करोऽद्य सुदत्तश्रेष्ठिगृहाद्धनं हृत्वा निर्ग-च्छन्नस्माभिर्दृष्टः। ततो राजाज्ञया शूलारोपणनिमित्तं वध्यभूमौ नीतः। तावत्पलायित्वा तव पार्श्वे समागतः। तदनुजानीहि कुमार ! येन राजाज्ञां सफलीकुर्मः।' कुमारेण चिन्तितम्—'महात्मनां शरणागत-समर्पणं न युक्तम्, तस्कररक्षणमपि न युक्तम् । ततोऽहं किं करोमि ?' चिन्तितं पुनः कुमारेण—'यादृशस्तादृशो भवतु परं शरणा-गतानां रक्षणमेव युक्तम् ।' कुमारेणोक्तम्—'मयि जीवत्येनं मारयितुं कोऽपि न समर्थः। सर्वथा प्रलयेऽप्येनं नार्पयामि। तातस्याग्रे यात्वा कथयत।' दण्डपाशिकै राज्ञोऽग्रे विज्ञप्तम्। राजा रुष्टः। कुमारस्य देशत्यागः समादिष्टः। ततो हर्षितः कुमारः सुमित्रेण सह देशान्तरं प्रति चचाल। लङ्घितनैकराज्यः कुमारः परिभ्रमन् अन्यदा एकस्मिन् महावने परिश्रमस्फेटनार्थम् एकस्य वटवृक्षस्य छायायां सुप्तः। सुमि-त्रोऽपि तस्य प्रहरके स्थितः। इतश्च तस्मिन् वटे एको यक्षः परि-

१. ददात् for ददाति Z.

वसति । तेन तयो रूपादिगुणरञ्जितेनैवं चिन्तितम्—'एनयोः किञ्चि-दातिथ्यं करोमि' इति चिन्तयित्वा यक्षः प्रत्यक्षो बभूव। सुमित्रोऽपि 'अयं कोऽपि देव' इति विचिन्त्याभ्युत्थानं चकार। ततो यक्षेण भणितम्—'भो सुमित्र ! अहमत्र वटे निवसन् यक्षः।' सुमित्रेण नमस्कारो विहितः। यक्षेणोक्तम्—'भो महाभाग ! युवामद्य मम प्राघूर्णकौ। वद किमातिथ्यं करोमि।' सुमित्रेणोक्तम्—'युष्माकं दर्शनमेवातिथ्यम्।' यक्षेण भणितम्—'तथाप्यमोघं देवदर्शनम् इति ज्ञात्वा गृहाणेमौ द्वौ मणी।' सुमित्रेण मणिमाहात्म्यं पृष्टम्। यक्षेणोक्तम्—'एको यो नीलमणिः सप्तरात्रं पूजितो राज्यं ददाति। द्वितीयो रक्तमणिः, तव मनोरथादधिकं दिवसभोगसामग्रीं दास्यति। नीलमणिः राजकुमाराय दातव्यः।' सुमित्रेण द्वावपि मणी गृहीतौ। यक्षोऽदृश्यत्वं भेजे। सुमित्रेण चिन्तितम्—'अहो राजकुमारस्य पुण्यप्रभावो यद्देवा अप्येवंविधं साहाय्यं कुर्वन्ति।' ततश्च प्रभाते जाते द्वावपि चलितौ। राजकुमारस्य बुभुक्षा लग्ना। यावत्फलभक्षणा-योद्यमं करोति तावत्सुमित्रेण वारितः। इतश्च मध्याह्नकाले महाशाल-नगरे गतौ नगरोद्याने स्थितौ। ततश्च सुमित्रेण नीलमणिः कुमारा-यार्पितः। कुमारेण विस्मयपरेण पृष्टम्—'इदं महारत्नं कुतो लब्धम्? सुमित्रेणोक्तम्—'तव पुण्यप्रभावात्। प्राप्ते राज्ये सर्वं निवेदयि-ष्यामि।' कुमारेण पृष्टम्—'मित्र ! कथं राज्यलाभो भविष्यति ?' इति चिन्तयन् सहकारच्छायायामुपविष्टः। सुमित्रेणाप्येकान्ते गत्वा चिन्तामणिः पूजितो दिवसभोगं प्रार्थितः। तत्क्षणादेवमङ्गमर्दकाः समागताः। तैरङ्गमर्दकैः सविनयं सुगन्धतैलेन द्वयोः कुमारयोर्मर्दनं दत्तम्। ततश्च सुगन्धोद्वर्तनहस्ता दिव्यरूपधारिण्यः स्त्रियः समा-गताः। ताभिर्द्वयोः कुमारयोरुद्वर्तनं कृतम्। ततश्च मज्जनकृते स्नान-मण्डपे गतौ द्वौ कुमारौ। ततो दिव्यदेवाङ्गनावर्गेण प्रचुरसुवर्ण-सिंहासनोपविष्टौ सुगन्धनीरभरितशृङ्गारैः स्नानं कारितौ। ततश्च प्रधानदेवदूष्यवस्त्राणि परिधापितौ। ततश्च पुष्पाणि शिरसि बद्ध्वा श्रीचन्दनेन शरीरेऽङ्गरागं कृत्वा भोजनं कारितौ। ततो भोजनान-न्तरं क्षणेन तत्सकलमप्यदृशीबभूव। ततश्च राजकुमारेणोक्तम्—'सुमित्र ! एतत्किमपूर्वमाश्चर्यम् ?' सुमित्रेणोक्तम्—'कुमार ! एष

नीलमणिप्रभावः ।' इतश्च तस्मिन्नेव महाशालनगरेऽपुत्रो राजा मृतः । ततः सामन्तवर्गेणाधिवासितानि गजतुरगप्रमुखानि पञ्चदिव्यानि । गजो गुलुगुलायमानो नगरोद्यान आगतः । तत्राभिषिक्तो वीराङ्गद-नामा राजकुमारः । शुण्डाग्रेण धृत्वा निजकुम्भस्थल आरोपितः । 'जयति महाराजः' इति भणद्भिः सामन्तमहामन्त्रिप्रमुखैः प्रणतः । मन्त्रिवर्गो विज्ञपयति राजानम्—'स्वामिन्' इति । नगरमध्ये पादमवधारितः । विस्मितो राजा । सुमित्रोऽपि सुस्थीभूतः । सुमित्रेण चिन्तितम्—'भवतु मम प्रियमित्रस्य राज्यम् ।' अहं निजेच्छया राज्ञः प्रच्छन्नो नगरमध्ये विलासान् करिष्यामि' इति विचार्यादृश्यो बभूव । नगरमध्ये गतः सुमित्रः । राज्ञा सर्वत्र विलोकितोऽपि न दृष्टः । ततः सामन्तवर्गस्यादिष्टं राज्ञा; मम प्रियमित्रं विलोक्यानयत । ततो राजा नगरमध्ये प्रविष्टः । तत्र करोति राज्यम् । अष्टौ राजपुत्र्यः परिणीताः । एवं निष्कण्टकं राज्यं परिपालयति राजा वीराङ्गदः । सुमित्रोऽपि नगरमध्ये स्वेच्छया परिभ्रमति । अन्यदा तन्नगरीनिवा-सिनी रतिसेना नाम्नी वेश्या गवाक्ष उपविष्टा । तयाऽतीव रूपवान् सुमित्रो दृष्टः । चिन्तितम्—'नूनमयमतीव श्रीमान्, ततो येन केन प्रकारेणात्रानीयते ततो रम्यं भवति । ततो दासी प्रहिता । तया सुमित्रो गृह आनीतः । रतिसेनया तस्य महती भक्तिर्विहिता । सुमित्रोऽपि तस्या रूपेण रञ्जितोऽत्यन्तं ततस्तस्या गृहे स्थितः । तत्र स्थितस्य तया सह महान् स्नेहो बभूव । सुमित्रोऽपि तस्यास्तथाविधं द्रव्यं न ददाति । ततः सा वेश्या मन्दस्नेहा जाता । अन्यदा सुमित्रेण चिन्ति-तम्—'एषा स्तोकदानेन तुष्टा न जायते ।' ततः शुभे दिवसे तेन चिन्तामणिराराधिता । ततश्चिन्तामणिप्रभावात्तेन तस्याः प्रचुरं धनं दत्तम् । परितुष्टा वेश्या । लोभेन पुनः प्रार्थितं द्रव्यम् । सुमित्रेण चिन्तामणिप्रभावाद्दत्तं धनम् । यदा यदा सा द्रव्यं प्रार्थयति तदा तदा सुमित्रो द्रव्यं पूरयति । अन्यदा वेश्यया चिन्तितम्—'निश्चित-मस्य समीपे चिन्तामणिर्वर्तते । अन्यदा कथमीदृशी दानशक्तिः ? तावद् ग्रहीष्यामि तद् रत्नम् ।' अन्यदा तस्य स्नानोपविष्टस्याङ्गत्राण-मध्याद् गृहीतश्चिन्तामणिः । सुमित्रोऽपि यावच्चिन्तामणिं विलोकयति तावन्न दृष्टः । चिन्तितं सुमित्रेण—'निश्चितमनयैव वेश्यया गृहीतो

मणिः ।' ततः सुमित्रेण वेश्या पृष्टा । ततो वेश्याऽलीककोपा सुमित्रं प्रति भणति—'पर्याप्तं तव दानेन । अलीककलङ्केन मां मा विगोपय समीनमध्ये' इति श्रुत्वा सुमित्रेण चिन्तितम्—'निश्चितमनयैव गृहीतश्चिन्तामणिः । अन्यथा कथं कृतकार्या इव एवंविधं निष्ठुरवाक्यं वदति ?' ततः सुमित्रस्तद् गृहान्निर्गतः । लज्जया राजानं विज्ञपयितुं न शक्नोति । ततो देशान्तरं प्रति चचाल । सुमित्रश्चिन्तयति—'अहो मम अज्ञानत्वं यत्स्त्रीमात्रेणापि वञ्चितोऽहम् । साम्प्रतं कमपि प्रकारं चिन्तयामि येनाहं तस्याः कमपि द्रोहं करोमि । अन्यच्च—

उवयारं उवयारीण वेरविजयेणं च वेरीणं ।
काउं जो न समत्थो धिगत्थु पुरिसत्तणं तस्स '॥ ५ ॥

इति चिन्तापरो देशान्तरं परिभ्रमन् प्रवरारामदुर्गमन्दिरालकृतमेकं महानगरं पश्यति । नगररमणीयतां दृष्ट्वा सहर्षो बभूव । यावन्नगरमध्ये प्रविशति तावन्नगरं सर्वं शून्यं पश्यति । देवकुलेषु किलकिलायमानानि कपिकुलानि पश्यति । गृहमध्ये घुरघुरारावं कुर्वतः सर्वत्र व्याघ्रान् पश्यति । तोरणेषु प्रलम्बमानान् सर्पान् पश्यति । ततश्च नगरमध्ये गृहाद् गृहं परिभ्रमन् गतो राजमन्दिरं सुमित्रस्तत्रापि राजमन्दिरे कमपि मानुषं न पश्यति । तदा सप्तभूमौ गतः । तत्र कुङ्कुमरागपिञ्जरितशरीरं कर्पूरपूरेण धवलितोत्तमाङ्गं सुरभिकुसुममालालङ्कृतसरलग्रीवं लोहनिगडसंदानितचरणयुगलम् एवंविधं करभीयुगलं पश्यति । चिन्तितं सुमित्रेण—'अहो आश्चर्यम् । एते करभ्यौ अत्र शून्यनगरे कथमागतौ ? अथवात्र सप्तभूम्युपरि कथं चटिते ?' यावच्चिन्तां करोतीत्थं तावत्तत्रैव गवाक्षे द्वौ दब्बडकौ पश्यति । एकस्मिन् दब्बडके धवलमञ्जनं द्वितीये कृष्णम् । तत्रैव नेत्राञ्जनशलाकां पश्यति । चिन्तितं सुमित्रेण—निश्चितमेतद्दिव्ययोगाञ्जनं वर्तते । धवलाञ्जनेन करभीनेत्राण्यञ्जितानि, तदेते मानुषिण्यौ अञ्जनकप्रयोगात् करभ्यौ सञ्जाते । ततः कृष्णाञ्जनेन तयोर्नेत्राण्यञ्जितानि सुमित्रेण । ततश्चाञ्जनबलाद् अप्रतिमरूपे मानुष्यौ जाते । ताभ्यां कन्यकाभ्यामुक्तं सुमित्रं प्रति—'एवंविधे शून्यनगरे युष्माकमागमनं

1. पिञ्जलसमशीर for पिञ्जरितशरीरं Z.

कुतः सञ्जातम् ?' सुमित्रेणोक्तम्—'मम कुशलं प्रवर्त्तते, परं महदाश्चर्यं मम चित्ते। अस्मिन् शून्ये नगरे युवां स्त्रीरूपधारिण्यौ कुतः सम्प्राप्ते ?' तयोरेकया निजवृत्तान्त उक्तः—"अत्रैव भरते उत्तरस्यां दिशि गङ्गानदीतटे सुभद्रं नाम नगरम्। तत्र गङ्गादित्यो नाम श्रेष्ठी। तस्य वसुधारा नाम्नी भार्या। तस्याष्टपुत्राणामुपरि द्वे कन्ये जयाविजया नाम्न्यौ जाते युगलिन्यौ। क्रमेण नवयौवनारूढे सञ्जाते। इतश्च तत्रैव गङ्गापुलिनवने प्रियभाषी प्रस्तावकथानिपुणो निमित्तविद्याकुशलो रूपवान् सुशर्मा नाम जटाधारी परिवसति। अन्यदा मम पित्रा भोजनार्थं सगौरवं निमन्त्रितो भरटकः। भोजनवेलायां मम पित्रा तस्य चरणौ प्रक्षाल्योपवेशितो भोजनार्थम्। ततश्च खाद्य[1]लेह्यदिव्य आहारः परिवेषितः। तस्मिन् क्षणे आवाभ्यां तालवृन्तेन सह तस्य वायुः कृतः। ततश्च तेन तापसेन भोजनं कुर्वताऽस्मद्रूपं निरीक्षितम्। कन्दर्पपरवशो बभूव। ततश्च कन्दर्पपरवशेन तेन तापसेन चिन्तितम्—

डब्भउ वउ पासंडचंडु धिसिधिसि झांणग्गहु।
झिम्भउ सिवपुरिपडउवज्जवइकुंतहत्थग्गहु ॥ ६ ॥
जइ परिसतरुणिहिं सणाहु रइसुखु न माणउ।
ता मन्नउं मइ निव्विसे सुनिछ अप्पाणउ ॥ ७ ॥

इति चिन्ताप्रपन्नस्य तस्य भोजनं विस्मृत्य गतम्। योगीवन्मौनं कृत्वा ध्यानं नाटयति। तावच्छ्रेष्ठिनोक्तम्—'भो महात्मन्! भोजनं कुरु। इदानीं न युक्तं चिन्तां कर्तुम्। भक्तं शीतं भवति' इति भणितेन चिन्ताप्रपन्नेन तेन तापसेन किञ्चिद्भोजनं कृतम्। भोजनानन्तरं श्रेष्ठिना पृष्टम्—'महात्मन्! एवं किं दुःखं भवतां प्रवर्तते येन भोजनमपि विस्मृत्य गतम्।' तापसेनोक्तम्—'भोः श्रेष्ठिन्! युष्मत्सदृशेषु भक्तिपरेषु जन्तुषु वर्तमानेषु अस्माकं किञ्चिदपि दुःखं नहि, परन्तु भवतामकुशलत्वं द्रष्टुं न समर्था वयम्'। इति भणित्वा गतो निजस्थानं तापसः। श्रेष्ठिना चिन्तितम्—'निश्चितमयं महानैमित्तिकः, तदनेन ज्ञानबलेन किञ्चिदस्माकं दृष्टमकुशलम्।' ततो व्याकुलचित्ते-

१. Z. adds स्वाद्य after खाद्य. २. श is missing in Z.

नाल्मत्तातेन तस्य मठे गत्वा एकान्ते स[1] तापसः पृष्टः। ततस्तापसः प्राह—'किं करोमि? एकतो व्याघ्रः, एकतस्तटी, त्वं महाभक्तिमान् अलङ्घनीयोसि। मुनिजनस्येदृशं वक्तुमयुक्तम्। तथापि भक्तिपरस्य तवाग्रे कथयिष्यामि। तत्र भोजनक्षण उपविष्टेन मया तव पुत्र्योर्लक्षणपङ्क्तिर्दृष्टा जनकपक्षक्षयकारिणी। एवं चिन्तापरवशेन मया भोजनं परित्यक्तम्। तवोपरोधेन किञ्चिद्भोजनं कृतम्।' ततो भयातुरेणोक्तं श्रेष्ठिना—'भगवन्नस्ति कोऽप्युपायः।' तापसेन भणितम्—'एष उपायो दुष्करोऽस्ति। इमे पुत्र्यौ कुलस्याभीष्टे। कोऽपि त्यक्तुं न दास्यति।' व्यवहारिणोक्तम्—'त्यजेदेकं कुलस्यार्थे' इति न्यायाद् यद् यूयमादिशथ तत् करोम्यहम्।' तापसः प्राह—'यद्येवं तदिमे कन्ये सर्वाङ्गीणाभरणानि परिधाप्य काष्ठमञ्जूषामध्ये निक्षिप्य सर्वलोकप्रच्छन्नं गङ्गाप्रवाहे प्रवाह्य पश्चाच्छान्तिकं क्रियते ततो रम्यं भवति।' एवमुक्ते व्यवहारिणा तथैव कुलरक्षानिमित्तं महामञ्जूषा कारिता। ततः स्नानं काराप्य सर्वाभरणानि परिधाप्य तत्र मञ्जूषामध्ये द्वे पुत्र्यौ क्षिप्ते। मञ्जूषामध्ये[2] शम्बलं क्षिप्तम्। मञ्जूषाद्वाराणि निस्सारितानि! ततो गङ्गाप्रवाहे प्रवाहिता मञ्जूषा। पिता निजगृहे आगतः। ततश्च तापसेन शान्तिकं कृतम्। तापसो निजमठीं गतः। निजशिष्याणामग्रे कथितम्—'रे शिष्या अद्य भगवत्या गङ्गादेव्या हिमाचलपर्वतान्मन्त्रसिद्धिनिमित्तं पूजोपकरणपरिपूर्णा काष्ठमञ्जूषाऽऽनीता वर्तते। युष्माभिरधस्तनतीर्थे गत्वा सा काष्ठमञ्जूषाऽऽनेतव्या, नोद्घाटयितव्या, यद्युद्घाटयिष्यथ तदा मम मन्त्रविघ्नो भविष्यति।' चिन्तितं शिष्यैः—'अहो! अस्माकं गुरोर्माहात्म्यम्। सर्वेऽपि शिष्याः सविस्मया जाताः।' इतश्च गुरुणा भणितम्—'द्विगव्यूतिप्रमाणभूमौ तत्तीर्थं भवति।' ततश्चलिताः शिष्याः। इतश्च सा काष्ठमञ्जूषा एतस्य नगरस्य स्वामिना सुभीमराज्ञा नदीमध्ये क्रीडां कुर्वता दृष्टा। सा कौतुकेन गृहीता, तावदुद्घाटिता, दृष्टे द्वे कन्ये। राज्ञा कन्यारूपं दृष्ट्वा कन्दर्परूपपरवशेन मन्त्रिणं प्रत्युक्तम्—'भो मन्त्रिन्! विलोकयाश्चर्यम्। यतः—

---

१. स is missing in *Z*. २. The portion beginning with द्वे and ending with ॰मध्ये is missing in *Z*.

पायालकन्नयाउ किं वा विज्जाहरीउपउमाउ[1] ।
किं वा सग्गवहूउ किं वा नरनाहधूयाउ ॥' ७ ॥

राज्ञा कन्ये पृष्टे । ताभ्यां किञ्चिदपि नोक्तम् । अत्रान्तरे विज्ञातनरेन्द्राभिप्रायेण मित्रेण जल्पितम्—'देव ! एवमलङ्कृतकन्यके कोऽपि कारणं विना न परित्यजति, तावदिष्टसिद्धिनिमित्तं केनापि गङ्गामध्ये एते कन्यके उपहारीकृते, तावदेतयोः स्थानेऽन्यद् युग्मं परिक्षिप्य राजा गृह्णातु कन्यके ।' अन्येन भणितम्—'नारीयुग्ममेव स्थाप्यताम् ।' इतश्च वनखण्डान्मर्कटीयुग्ममानीय तत्र मञ्जूषामध्ये परिक्षिप्तम् । तत्रैव मुद्रित्वा सा काष्ठमञ्जूषा गङ्गाप्रवाहे प्रवाहिता । ततो राजा हृष्टो जातः । नगरमध्ये समागतः । राज्यं करोति । ततश्च तैस्तापसशिष्यैर्गङ्गातटे परिभ्रमद्भिश्चिरकालेन दैवयोगाल्लब्धा काष्ठमञ्जूषा । गृहीत्वा शीघ्रं तापसायोपनीता । तापसो हृष्टो जातः । तस्य पापगुरोरतीवोत्कण्ठितस्य कथं कथमप्यस्तमितो दिवसनाथः । ततश्च तेन तापसेन निजशिष्या एवं भणिताः । 'भोः अद्य युष्माभिर्मठीकपाटेषु तालं दत्त्वा बहिः स्थातव्यम्, यावत्सूर्योदयो भवति तावत् प्रचुरपोकारितमपि श्रुत्वा नागन्तव्यम् । सर्वथा मम मन्त्रसिद्धिविध्वंसनेन द्रोहकैर्न भवितव्यम् ।' ततश्च तापसो मठीकपाटानि दत्त्वाऽऽत्मना मध्ये स्थितः । ततश्च तापस इति वक्तुं प्रारभत—'हे स्त्रियौ ! युष्माकं भाग्यस्य नावधिर्यत् स्वर्गवास्यहं भर्ता लब्धः । तावन्मम मानभङ्गो न कर्तव्यः ?' इत्युक्तवता तेन मञ्जूषामुद्धाटयितुं द्वौ हस्तौ नियोजितौ । यावदुद्धाटिता मञ्जूषा तावद्बुभुक्षाव्याकुलाभ्यां मर्कटीभ्यां स दुष्टतापसो गृहीतः । मर्कटीभ्यामेवंविधः कृतस्तापसः, यतः—

खरनहरदिरियंगो[2] तोडियकन्नो[3] विदारियकवोलो ।
दंतग्गभग्गनासो कउ हयासो पवंगीहिं ॥ ८ ॥

हा हा धावह धावह सीसाए सोहं रक्खसीहिं खज्जामि ।
इय विलवंतो तिव्वं पडिउ सहसत्ति धरणीए ॥ ९ ॥

---

१. ०पयाउ for ०पउमाउ Z. २. ०यंगौ for ०यंगो Z. ३. ०कन्नौ for ०कन्नो Z.

तस्य शिष्या एवं विलापं श्रुत्वा नागताः, 'यतो गुरुणा वयं वारिताः, इति। ततश्च ताभ्यां मर्कटीभ्यां खाद्यमानसर्वाङ्गः क्रमेण विदारितचक्षुर्वक्षःस्थलो रात्रिप्रान्ते मृतः। भवितव्यतानियोगात् स तापसो मृत्वा महारौद्रो राक्षसो बभूव। ज्ञानेन निजपूर्वभवमरणं ज्ञात्वा दुष्टाचारो जातः—'एतेन सुभीमेन राज्ञा मम कलत्रे अपहृते। अस्य प्रयोगेन मम कुमरणं जातम्, ततस्तापसो राज्ञः सुभीमस्य प्रकुपितः। इतश्च तेन तापसेन पूर्ववैरं स्मृतवता राजानं व्यापाद्यावां द्वे कन्ये गृहीत्वा नगरमुद्वसीकृतम्।" ताभ्यां कन्याभ्यां सुमित्रस्याग्र एवमुक्तम्—'भो महासत्त्व! एषोऽञ्जनप्रयोगस्तेन राक्षसेन कृतः। धवलाञ्जनेन मनुष्या उष्ट्रा भवन्ति, कृष्णाञ्जनेन पुनर्मनुष्या भवन्ति। अयमस्माकं वृत्तान्तः। ततस्त्वमस्माकं भाग्येन समागतः। आवामस्माच्छून्यारण्यवासान्निर्विण्णौ। ततोऽमुष्मात्कष्टात्त्वं मोचय।' एतच्छ्रुत्वा प्रार्थनाऽभङ्गकरेण कारुण्यहृदयेनोक्तं सुमित्रेण—राक्षसोऽधुना कुत्र वर्तते? कियत्यां वेलायां भवत्याः समीपे समायाति?' ताभ्यां कन्याभ्यामुक्तम्—'राक्षसद्वीपात्कदाचिद्दिनद्वयप्रान्ते कदाचिद्दिनत्रयप्रान्ते निजेच्छया समायाति, कदाचित्पक्षं तिष्ठति, मासं च पुनः। अद्य निश्चयेन समेष्यति, तावत्त्वया निशाविभागे अधस्तनभूमौ रत्नसरोवारिगतेन जीवितरक्षा कर्तव्या। प्रभाते यथायुक्तं कुर्याः।' ततः सुमित्रस्ते कन्ये पुनरप्युष्ट्र्यौ कृत्वा तत्रैव प्रदेशे निलीय स्थितः। तावत्सन्ध्यासमये 'अद्य मनुष्यगन्धः समायाति[2] कुतः' इति भणन् सम्प्राप्तो राक्षसः। ताभ्यां कन्याभ्यामुक्तम्—'आवां मानुष्यौ। तत आवयोर्गन्धः प्रवर्तते।' ततो राक्षसस्तत्रैव तां निशामुषितः। प्रभाते ताभ्यां राक्षसो भणितः—'स्वामिन्! एकाकिन्यौ आवां बिभ्यतः। अतस्त्वया त्वरितमागन्तव्यम्' इति। एवमिति कथयित्वा गतो राक्षसः। सुमित्रेणाप्यञ्जनडब्बडकौ गृहीतौ। ते स्त्रियौ मानुष्यौ कृत्वा सप्तभूमेरवतार्य ततः पुनरपि करभ्यौ कृतौ। उपरि रत्नभारं निवेश्य महाशालनगरं प्रति चचाल। कतिचिद्दिनपर्यन्ते एकस्य भूतविद्यानिपुणपुरुषस्य मिलितः। तस्याग्रे कथितं निजचरित्रं सुमित्रेण। तेन कथितम्—'सुमित्र! मा भैषीः' इत्युक्त्वा

१. रदाद्य॰ for खाद्य॰. २. समायाति is missing in Z.

धीरवितस्तेन विद्यासिद्धपुरुषेण । इतश्च कृतविकरालरूपो घोराट्टहासोत्त्रासितसत्त्वगणः समागतो दुष्टराक्षसः । तावत्तेन विद्यासिद्धेन पुरुषेण स्तम्भितो राक्षसः । ततो राक्षसेन मन्त्रमाहात्म्यरञ्जितेन सिद्धं प्रति भणितम्—'अहो विद्यासिद्ध ! राक्षसानां भेषजानि भवन्तीति जनप्रवादः त्वया सत्यापितः । तावन्मां मुञ्च, यद्भणिष्यसि तत्करिष्यामि ।' विद्यासिद्धपुरुषेणोक्तम्—'यद्येवं तदस्मिन् पुरुषे सुमित्रे वैरभावं त्यज ।' राक्षसः प्राह—'यद्येवं ततो मम प्रियतमे अस्य पार्श्वात् समर्प्यार्पय ।' विद्यासिद्धपुरुषेणोक्तम्—'निश्चितं परवधूगमनात्तव कष्टं दारुणमरणम् । मृतोऽपि नरके यास्यसि । त्वं तावद्देवरूपः । एते मानुष्यौ । तत्तव देवरूपस्य मानुष्योर्विषये को मोहः । सर्वथा एते स्त्रियौ मुञ्च । एतदधमपुरुषाणां कर्म' इति सिद्धपुरुषवचनं श्रुत्वा राक्षसः परितुष्टः । स्त्रियौ सुमित्रस्य दत्ते । राक्षसो निजस्थाने गतः । ततः परितुष्टेन सुमित्रेण विद्यासिद्धपुरुषो भणितः—'भो महासत्त्व ! महासाहसिक ! महाकरुणापर ! नास्ति तव समानः कोऽप्यन्यः परोपकारी येनैवंविधो दुष्टराक्षसो मन्त्रबलाज्जितः ।' विद्याधरसिद्धपुरुषेणोक्तम्—'सुमित्र ! अहं किं साहसिकः ? त्वमेव साहसिकः, येन त्वया मन्त्रबलं विना राक्षसस्त्रियौ आनीते' इति परस्परं प्रियालापं कृत्वा द्वावपि स्वस्थाने प्रचलितौ । विद्याधरसिद्धोऽपि स्वस्थाने गतः । सुमित्रोऽपि भार्याद्वयसहितो महाशालनगरे गतः । तत्र रम्यं धवलगृहं कारितम् । तत्र सकलत्रो विलासान् करोति, सुखेन वर्तते । इतश्च सा रतिसेना सुमित्रविरहेण दुःखिनी जाता । त्रिरात्रं यावद् भक्तं प्रत्याख्यातम् । तस्य रत्नमध्याद् द्रव्यं न पतति ततो विशेषतो दुःखपरा जाता । तस्या वृद्धमात्रा प्रतिबोधिताऽपि न मुञ्चति तस्मिन्ननुरागम् । वृद्धवेश्यां प्रति भणति रतिसेना—

'आवि आलिंगइ अंगं भयथं मढेउ धुवं मुज्झ ।
न उण सुमित्ता अन्नो पुरिसो सरिसा विमायोण ॥ ८ ॥

वरमग्नौ प्रविशामि पुनः सुमित्रादन्यं पुरुषं न रमामि' इति निश्चयं कृत्वा स्थिता । अन्यदा गवाक्ष उपविष्टया रतिसेनया कृतशृङ्गारो दृष्टः सुमित्रः । ततश्च त्वरितं गत्वा सविनयं निजगृह

१. मः for म॰ Z.

आनीतः। महती भक्तिः कृता। ततो वृद्धवेश्ययोक्तं सुमित्रं प्रति—'वत्स! एतावन्ति दिनानि त्वं कुतो गतः? यस्मिन् दिनेऽस्माकं गृहात्त्वं गतस्तद्दिवसात्प्रभृति तव वियोगेनैषा मम पुत्री प्राणसन्देहं गता।' ततः सुमित्रेण चिन्तितम्—'अहो! अनया पुनः कूटं मण्डितं ततोऽहमपि कियत्कालमस्या गृहे स्थास्यामि। अन्यथा रत्नं न घटिष्यति। अयमेवोपायो रत्नप्राप्तये' इति विचिन्त्य स्थितो वेश्यागृहे। कियत्यपि गते कालेऽन्यदा सुमित्रेण रतिसेनैवं भणिता—'प्रिये! अपूर्वं कौतुकं तव दर्शयामि यदि न करोषि कोपम्।' तयोक्तम्—'तद्दर्शय कौतुकम्।' ततः सुमित्रेण पूर्वोक्तेनाञ्जनप्रयोगेण रतिसेना करभीकृता। स्वयं स्वमन्दिरे गतः। इतश्च भोजनावसरे दास्याऽऽकारिता रतिसेना, यावत् पश्यति तावत् करभी दृष्टा, नहि सा रतिसेना। ततश्च भयभीतया दास्या सकलपरिजनस्याग्रे उक्तम्—'नूनमस्माकं स्वामिनी राक्षसेन भक्षिता। अन्यथा राक्षसं विना कथमस्मिन् धवलगृहे करभी घटति।' परिजनोऽपि तत्रागतः। सर्वस्य कस्यापि मनसि विस्मयो बभूव। ततस्तस्याः परिजनेन परस्परमित्युक्तम्—'अद्य कल्येऽस्याः को भुजङ्गः?' दास्या उक्तम्—'देशान्तरादागतो निश्चितं कोऽपि सकलकलापारगामी अस्याः पतिः। ततो निश्चितं तस्यैव चेष्टितम्।' ततो यावत् स पुमान् दूरे न याति तावद् राज्ञोऽग्रे निवेदितम्। ततो वृद्धवेश्यया राजमन्दिरे गत्वा राज्ञोऽग्रे निवेदितम्। राज्ञा चिन्तितम्—'निश्चितं सुमित्रान्मम मित्रादन्यस्य कस्यापीदृशं न सम्भाव्यते।' ततो राज्ञा भणिता वृद्धवेश्या—'भद्रे! अस्य तव गृहे आगतस्य कियान् कालो बभूव।' ततो वेश्यया भणितम्—'यस्मिन् दिने देवेनैतस्य पुरस्य राज्यं प्राप्तं तस्मिन् दिने मम गृहेऽयं पुरुषः समागतः। अन्तरे कुत्रापि देशान्तरे गतः। साम्प्रतं पुनरागतः। एकः पक्षो बभूव तस्यागतस्य।' राज्ञा इति श्रुत्वा वेगेन मित्रविलोकनार्थमादिष्टा निजसेवकाः। ततश्च वृद्धवेश्यया राजसेवकानां दर्शितः सुमित्रः। तै राजसमीप आनीतः। राजा दूरादपि निजमित्रमायातं दृष्ट्वोत्थितः। सम्मुखं गाढमालिङ्गय द्वावप्युपविष्टौ। परस्परं वार्त्तालापो बभूव। वीराङ्गदराज्ञा पृष्टम्—'कुशलं धूर्तस्य मम मित्रस्य सुमित्रस्य।' सुमित्रेण भणितम्। 'सर्वमस्ति भवतां प्रसादेन।' राज्ञा कथितम्—'शेषवृत्तान्तोऽस्तु, साम्प्रतं कथय

कस्मादेतस्या वेश्यायाः पुत्री उष्ट्रीकृता।' सुमित्रेण कथितम्—'देव! यथा सुखेनैषा वृक्षपल्लवान् चरति। एतस्यास्तावद् द्रव्यं नहि। नहि याचता भोजनं सम्पद्यते।' अत्रान्तरे दास्योक्तं सुमित्रं प्रति—'कपोलवादेनालम्। कुरु निरामयां मम स्वामिनीम्। दृष्टं तव कलाकुशलत्वम्।' सुमित्रेण भणितम्—'पापिष्ठे! एतत् किं कलाकौशलम्? त्वामपि रासभीं कृत्वा सकलनगरस्य विष्ठां चारयिष्यामि यथा मम स्वामिनो नगरेऽशुभगन्धो न भवति। अथवा समर्पय मम चिन्तारत्नम्।' इतश्च राज्ञोक्तम्—'मित्र! तत्किं चिन्तारत्नम्?' सुमित्रः प्राह—'यस्य प्रभावान्मया वनमध्ये तव भोजनसामग्री कृता।' ततः कोपारुणलोचनेन राज्ञा भणितम्—'रे दुष्टगणिके! प्रत्यक्षतस्करे! मम मित्ररत्नं गृहीतम्।' ततो वेश्या भयभीता शरणमिति भणन्ती सुमित्रचरणयोः पतिता। सुमित्रेणोपशामितो वीराङ्गदो राजा। निजचिन्तारत्नं गृहीतम्। प्रगुणीकृता रतिसेना सुमित्रविषयेऽतीव स्नेहपरा। ततो वृद्धवेश्यया दत्ता सुमित्राय रतिसेना। एवं कलत्रत्रितयसहितो वैषयिकसुखमनुभवन् गमयति कालं सुमित्रः। अन्यदिने राज्ञा मित्रं प्रत्युक्तम्—'सुमित्र! तस्मिन् दिने मां मुक्त्वा इयत्कालं कथं गतः? अन्यच्च किं सुखं दुःखमनुभूतं त्वया? पूर्वोक्तं मणियुगलं कथं प्राप्तम्? एष वृत्तान्तो मम कौतुकमावहति।' ततश्च सुमित्रेण मणिलाभादारभ्य सर्वो यथास्थितो वृत्तान्तः कथितः। एवं सुमित्रवृत्तान्तं श्रुत्वा राज्ञा विस्मितेन सुमित्रं प्रत्युक्तम्—'अहो तव व्यवसायदक्षता। यतः—

विणयाउ गरुयत्तं वेवसायाउ मणिछिया लच्छी।
पच्छाउ आरोग्गं सग्गो मुखो विधम्माउ॥ ९॥'

ततः सुमित्रेण भणितम्—'राजन्! व्यवसायेन किं भवति पुरुषाणाम्? पुण्यमेव प्रधानम्। व्यवसायं विनापि पुण्येन सर्वं रम्यं जायते। यतः—

जं दुल्लह जंजि दूरि जं दुग्गमिसंठिउ।
जं परवसुब्बिरकालसजवुजणिहिं अहिट्ठिउ॥ १०॥

1. The portion beginning with साय and ending with वव is missing in Z. २. म्गं सग्गो for ग्गं सग्गो Z.

तं सुहुचिंतिउमित्तुजणहलीलहिं संपज्जइ ।
जइ पुव्वज्जिउधम्मलेसु सुसहिज्जउ चिट्ठइ ॥ ११ ॥'

इत्यादिधर्मवर्णनं कृत्वा द्वौ मित्रौ तत्र राज्यं कुरुतः । तावद् देव ! रत्नशिखराज ! एष कथाप्रबन्धः ।

वच्चउ जत्थ वितत्थवि जं वा तं वा करेउ ववसायं ।
पुन्नाहि उय पावइ सुहाइं वीरंगदाउ व्व ॥ १२ ॥'

इतश्च भट्टमुखाद् रत्नशिखो राजा इमां कथां श्रुत्वा चिन्तयति—'अहो ! अपूर्वाणि धीरपुरुषाणां चरितानि । यतः—

आवइ सहस्सकसवट्टएसु घणियं कसिज्जमाणस्स ।
पुरिसस्स सुवन्नस्स व्व माहप्पंपइडं होइ ॥ १३ ॥'

रत्नशिखो राजा एवं चिन्तयति—'देशान्तरं विना कीर्तिः ख्यातिः कलाग्रहणं किञ्चिन्न भवति । तावत्सर्वथा देशान्तरे गत्वा निजपुण्यपरीक्षां करिष्यामि' इति विचिन्त्य पूर्णभद्रनाम्नो निजामात्यस्याग्रे वृत्तान्तः कथितः । तेन भणितम्—'देव ! युष्माकमिच्छाभङ्गं कः करोति ? तथापि विज्ञपयामि देवम्—दुर्गमानि देशान्तराणि । मार्गा अपायबहुलाः । छिद्रान्वेषिणो वैरिणः । अनायाससहं देवशरीरम् । अतः प्राप्तराज्यमेतदेव पुण्यफलं परिपालयतु देवः ।' मन्त्रिणा एवं बहुप्रकारैर्भणितोऽपि न तिष्ठति राजा । ततश्च गुप्तमन्त्रं कृत्वा पश्चिमरात्रौ खड्गसहायो नगरान्निर्गतो राजा उत्तराभिमुखं चचाल । इतश्च ग्रामाकरपुरनगरेषु बहुविधानि कौतुकानि विलोकयन् सर्वत्र निजपुण्यप्रभावेन विलसन् कदाचिद् भीमं कान्तारं प्रविष्टो राजा, तद् वनमीदृशं वर्तते—

सिज्झारवंजवजुंलवडवेडसकुडयकडाहपडिहत्थं ।
अंकुल्लविल्लसल्लइकयमालतमालसालड्ढं ॥ १४ ॥
निंबबअंबडंबरिकाउंबरिबोरिकइरघणरुद्दं ।
पिप्पलपलासनलनीलझिल्लभिल्लायडकडिल्लं ॥ १५ ॥
जंबूकयंबबिलियाकविट्थिकंथारिथोहिरिहिपरं ।
टिंबरुणिवरुणअसड्डयसिरीससीवन्निसंकिन्नं ॥ १६ ॥

१. शुह for सुहु Z. २. त is missing in Z. ३. A. reads विउव for उ । ४. Z. adds नेत्रवृत्त after वजु ।

हिंतालतालसीसमिसमिसंबलिलग्गसग्गवच्छूलं ।
धमधम्माणवेणुयपालिदुहट्टुयाइग्गं ॥ १७ ॥

ततश्च तस्मिन् वने यावत् कियतीं भूमिं याति तावदैरावण-सदृशं मत्तगजेन्द्रं पश्यति मेदिनीनाथः । राज्ञा चिन्तितम्—'अथात्र वने ईदृशरूपो गजः कथं वर्तते ?' तावद् गजेन्द्रोऽपि शुण्डमुत्पाट्य रत्नशिखराजसमीपे समागतः । ततश्च राज्ञा गजशिक्षादक्षेण गजो वशीचक्रे । तस्मिन्नवसरे गगनमण्डलाद् राज्ञः कण्ठे कुसुममाला पपात । राजा विस्मयपरो गगनमण्डले देवाङ्गनानामिति वचनं शृणोति 'अहो वीरचरित्रं जयति ।' ततश्च तस्मिन् गजेऽधिरूढो राजा उत्तराभिमुखं स्थितः । तावत् तृषाक्रान्तो विलोकयन् एकं महासरोवरं दृष्टवान् । राज्ञा गजेन्द्रादवतीर्य जलं पीतम् । गजेन्द्रो जलं पीत्वा सरोवरमध्यान्न निस्सरति । ततो गजं मुक्त्वा राजा चचाल । यावदग्रे याति तावदेकया स्त्रिया महार्घ्यमूलानि देवदुष्यवस्त्राणि समर्पितानि । ततश्च सर्वाङ्गोपाङ्गमलङ्करणं प्रदत्तम्, पुनरपि पुष्पविलेपनसहितं कर्पूरैलाकङ्कोलताम्बूलमिति । भणितश्च—'स्वागतं देवस्य ।' राज्ञा भणितम्—'भद्रे ! का त्वम् ?' स्त्री पुनः प्राह—'स्वागतमपूर्वदेवस्य ।' राज्ञोक्तम्—'भद्रे ! अपूर्वदेव इति त्वया कथमुक्तम् ।' स्त्री प्राह—'इन्द्रादयो देवाश्चिरकालं सेविता अपि ददति न ददति, अस्माकं सख्या त्वमाराधितः सफलीजातः ।' राज्ञा पृष्टम्—'कैषा तव सखी ? कदा तयाऽहं दृष्टः ?' राज्ञा इति पृष्टे तयोक्तम्—'इत उत्तरस्यां दिशि वैताढ्यनामा पर्वतोऽस्ति । तत्र सगयं नाम नगरम् । तत्र सूरणो नाम राजा । तस्य स्वयंप्रभा-महाप्रभानाम्न्यौ पुत्र्यौ । अन्यदा शशिवेगं राज्ये निवेश्य रवितेजचारणमुनिसमीपे सूरणेन राज्ञा दीक्षा गृहीता । ततश्च तल्लीलावलोकनात् सूरवेगस्य राज्यतृष्णा बभूव । ततश्च वसुवेगं नाम मातुलं सहायं कृत्वा शशिवेगेन सह युद्धं कर्तुं समागतः सूरवेगो विद्याधरः । शशिवेगोऽपि सूरवेगं सबलं ज्ञात्वा मन्त्रिणां वचनात् सबलवाहनो नगरान्निर्गत्याऽस्मिन् वने नगरं कृत्वा स्थितः । तस्य चन्द्रप्रभा नाम्नी कन्या वर्तते । अन्यदा नैमित्तिकेन चन्द्रप्रभां दृष्ट्वा राज्ञोऽग्रे निवेदितम्—'एनां यः परिणेष्यति तस्मात्तव स्वराज्यसम्प्राप्तिर्भविष्यति ।' शशिवेगराज्ञा पृष्टम्—'स कथं ज्ञातव्यः ?'

नैमित्तिकेन भणितम्—'सुग्रीवनगरस्वामिनो गन्धगजेन्द्रं मदोन्मत्तमत्रारण्ये परिभ्रमन्तं यो वशीकरिष्यति स तव पुत्रीभर्ता भविष्यति, राज्यं च दास्यति ।' ततश्च तद्दिवसात्प्रभृति अनुदिनं विद्याधरैः परिवृतः स एव गन्धगजो मिंठमवगण्य्य आलानस्तम्भमुन्मूल्यात्र वने प्रविष्टः। अतः कारणाच्छशिवेगपुत्र्या सखीसहितया चन्द्रप्रभयाऽऽकाशमार्गे स्थितया सोत्कण्ठं तव कण्ठे स्वयम्वरमाला परिक्षिप्ता। एतद्वस्त्रताम्बूलादिकं तव प्रहितम्।" यावत्सा विद्याधरी राज्ञोऽग्रे एवं निवेदयति तावत् कुतोऽपि तुरङ्गमसाहणं समागतम्। राजा विस्मितः। तावदेकेनाश्ववारेण प्रणामपूर्वमेवं विज्ञप्तः—'येन गजेन्द्रो वशीचक्रे साम्प्रतं स पुमान् कुत्र वर्तते। अस्माकं स्वामी तस्य दर्शनं वाञ्छति। तस्य शरीरस्य कुशलं पृच्छति।' ततो विद्याधरी प्राह—'य एवं विलोक्यते स किं गजमपहृत्य गतः?' अश्ववारः प्राह—'एवं न, परं मम स्वामी परितुष्टस्तस्य। तेन कारणेन तस्य दर्शनं वाञ्छति।' ततो विद्याधरी कथयति—'कृतान्तसदृशो महागजः किं मनुष्येन वशीक्रियते? ततोऽयं देवस्वरूपः तावत् तव स्वामी स्वयमागत्यैनं विलोकयतु।' एवं श्रुत्वा सविस्मितमश्ववारेण निजस्वामिनः कथितं वसुतेजराज्ञः। तेनापि चिन्तितम्—'अचिन्त्यानि पुण्यविलसितानि।' ततो राज्ञा तस्याऽऽकारणाय निजमन्त्री प्रहितः। अत्रान्तरे विद्याधरी स्वस्थानं प्रति गता। ततो मन्त्रिणा विविधविनयप्रतिपत्त्याऽऽवर्जयित्वा राज्ञः समीपे नीतो रत्नशिखो राजा। गजोऽपि महामिंठेन धृतः। ततश्च सिद्धकार्यो गतः सुग्रीवनगरे वसुतेजो राजा। तत्र रत्नशिखराजानमष्टौ कन्याः परिणाय्य निजसमीपे स्थापितः। अन्यदा वसुतेजराज्ञा रत्नशिखराजानं प्रत्युक्तम्—"पूर्वं सुमङ्गलनामा केवलज्ञानी मम पुरे समागतः। तस्य वचनेन मम प्रतिबोधो बभूव। अस्मान्नरकनिबन्धनाद् राज्यादहं निर्विण्णः। ततोऽविद्यमानराजभारयोग्यपुत्रेण मया सुमङ्गलकेवली पृष्टः। केवलिनोक्तम्—'यस्तव महागजेन्द्रं वशीकरिष्यति स तव राज्यधरो भविष्यति। ततो मामनुजानीहि, साम्प्रतं राज्यं गृहाण यथाहं दीक्षां गृह्णामि।' रत्नशिखराज्ञाऽनुमतं तस्य वचः। वसुतेजराज्ञा रत्नशिखराजाऽऽत्मपदे स्थापितः। स्वयन्तु दीक्षा गृहीता। रत्नशिखराजा तत्र राज्यसौख्यान्यनुभवति। इतश्च शशिवेगविद्याधरेण रत्नशिखस्य राज्य-

प्राप्तिनिर्वृत्तिर्ज्ञाता। ततश्च स्वयं तत्र गत्वा चन्द्रप्रभा पुत्री तस्मै रत्नशिखराज्ञे दत्ता, अपराजिता नाम विद्या दत्ता विद्यासहस्रपरिवारा। तं व्यतिकरं ज्ञात्वा सुवेगविद्याधरस्तत्रागत्य गजरूपं कृत्वा सुग्रीवपुरस्योद्याने स्थितः। इतश्च कौतुकवशेन रत्नशिखो राजाऽल्पपरिवारेण तत्र वने सम्प्राप्तः। तं मत्तगजं चिरकालं क्रीडयित्वा वशीचकार। यावत् तस्मिन् गजे राजा उपविष्टः तावद् गगनमार्गं उत्पपात। ततो राज्ञा वज्रदण्डसदृशेन मुष्टिप्रहारेण गजो मस्तकेन हतः। ततो महाप्रहारविधुरीकृतदेहो विस्मृतमन्त्रस्मरणो धरणीतले निपपात प्रकटीकृतनिजरूपो विद्याधरः। ततो विद्याधरो 'नमो अरिहंताणं' इति स्मरन् भूमितले लुठति। रत्नशिखराज्ञा चिन्तितम्—'अहो सङ्कटेऽस्य मन्त्रस्मरणम्, धन्योऽयम्' इति पानीयेन सिञ्चितः। पवनेन स्वस्थीकृत्योक्तं रत्नशिखराज्ञा। 'अहो महाभाग! क्षमस्व ममापराधम्।' ततो विद्याधरेणोक्तम्—'राजन्! अज्ञाततत्त्वस्य न तव दोषः। अयं ममैव दोषः। अहं महापापात्मा येन मया जानताऽपि तव महासाधर्मिकस्यैवं विहितम्।' राज्ञा पृष्टो विद्याधरः—'भो महाभाग! कस्त्वम्?' विद्याधरेणोक्तम्—'चक्रपुरनगरस्वामी सुवेगो नामाहं विद्याधरः। मया निजभगिनीनन्दनसूरवेगपक्षपातात् शशिवेगो राज्यान्निष्कासितः, सूरवेगो राज्ये स्थापितः, इतश्च नैमित्तिकमुखान्मया इति श्रुतं यत् शशिवेगस्य तव सकाशाद् राज्यलाभो भविष्यति इति श्रुत्वा तव वधार्थं हस्तिरूपं कृत्वा इहागतः। तावत्त्वया विनिर्जितः। अतोऽहं निर्विण्णोऽस्मात्संसारसमुद्रात्। मम राज्यं गृहाण त्वम्। अहं शशिवेगं क्षामयित्वाऽऽत्मसमीहितं करिष्यामि' इति कथयतोऽकस्मात् शशिवेगोऽपि तत्रैवागतः। सुवेगविद्याधरेण क्षमितः। एवमुक्तश्च—'शशिवेग! मम राज्ये एनं मम बान्धवं रत्नशिखं राजानं निवेशय।' रत्नशिखशशिवेगाभ्यामेवमुक्तः सुवेगः। 'महाभाग! कुलक्रमायातं राज्यं प्रतिपालय, पश्चात् वृद्धात्वतपोविधानं कर्तव्यम्' इति भणितोऽपि न तिष्ठति सुवेगः। गुरुपार्श्वे दीक्षा गृहीता। रत्नशिखसुवेगौ चक्रपुरे गतौ। रत्नशिखो राजा चक्रपुरस्वामी बभूव। सूरवेगेन ज्ञातमातुलवृत्तान्तेन वैराग्यपरेण दीक्षा गृहीता। शशिवेगाय राज्यं समर्पितम्। इतश्च प्राप्तसौख्यो

रत्नशिखो राजा वैताढ्यपर्वतराज्यं परिपालयति, अनेकानि जिन-भुवनानि कारयति, सुपात्रेभ्यो दानं ददाति, तीर्थेषु प्रभावनां करोति। अन्यदा साकेतपुरे सुजसनामानं तीर्थङ्करं समवसृतं पश्यति। तत्र सकलरोमोद्धर्षिततनुः भालस्थले रचिताञ्जलिरेवं जिनेन्द्रं स्तौति रत्नशिखराजा—

'जय जय जणवच्छल ! जलहरपवयणसवनयण !
नयणमणपमयवद्धणकणयरयणसममण ॥ १८ ॥'

इत्यादिस्तुतिपाठेन जिनेन्द्रं स्तुत्वा शेषपरिवारमुनीन् वन्दित्वा उपविष्टो जिनसमीपे रत्नशिखो राजा शृणोति धर्मदेशनाम्—

'सम्पदो जलतरङ्गविलोला यौवनं त्रिचतुराणि दिनानि ।
शारदाभ्रमिव चञ्चलमायुः किं धनैः कुरुत धर्ममनिन्द्यम् ॥ १९ ॥'

इति देशनां जिनमुखात् श्रुत्वा ततश्च निजपूर्वभवं पृष्टः स्वामी। स्वामिनोक्तम्—'तस्य पूर्वभवे नमस्कारप्रभावेन एवंविधराज्यसम्प्राप्तिः।' इति पूर्वभवं श्रुत्वा नमस्कारमाहात्म्यं श्रुत्वा विशेषतो धर्मपरो जातः। कियत्यपि गते काले प्राप्तवैराग्यो निजपुत्रस्य राज्यं दत्त्वा निर्मलचारित्रं प्रतिपाल्य प्राप्तकेवलो मोक्षं गतो रत्नशिखो राजा।

इति नमस्कारविषये रत्नशिखकथानकम् ॥

## कषायविषये अमरदत्तमित्रानन्दयोः कथा ।

अस्मिन् भरते सुरतिलकं नाम नगरम्। तत्र मकरध्वजो नाम राजा। तस्य मदनसेना नाम्नी राज्ञी वर्तते। अन्यदा राज्ञ्या स्वप्नमध्ये पद्मिनीषण्डमण्डितं सरोवरं दृष्टम्। सम्पूर्णे काले पुत्रजन्म बभूव। ततस्तस्य कुमारस्य पद्मकेसर इति नाम कृतम्। ततश्च क्रमेण युवराजा बभूव कुमारः। अन्यदा मकरध्वजराज्ञो मस्तके केशपाशं विवृण्वत्या मदनसेनया राज्ञ्या पलितं दृष्टम्—'स्वामिन्! धर्मदूतः समागत' इत्युपहासं कृत्वा राज्ञो हस्ते पलितं मुक्तम्। तद् दृष्ट्वा राजा कृष्णमुखो बभूव। ततः पद्मकेसरकुमारं राज्ये निवेश्य राज्ञीसहितो वने गत्वा तापसो बभूव। तत्र गतस्य तपतस्तस्य राज्याः पूर्वसम्भवो गर्भो ववृधे। ततो राज्ञा पृष्टा देवी—'देवि! किमेतत्?' राज्ञी प्राह—

१. राज्ञा for राज्ञ्या Z. २. राज्ञः for राज्याः A.

'देव ! पूर्वसम्भवोऽयं गर्भो मया व्रतविघ्नभयेन न निवेदितः।' ततो राज्ञा कुलपतये तत्स्वरूपं कथितम्। ततश्च सम्पूर्णे काले पुत्रं सुषुवे राज्ञी। अन्यतापसीभिरुपचर्यमाणापि भैषज्याभावात् सूतिरोगेण पीडिता राज्ञी मृता। इतश्चोज्जयिनीवास्तव्यो देवधरनामा व्यवहारी देवसेनाप्रियायुक्तो हर्षपुरं गत्वा निवृत्तस्तत्र तपोवने समागतः। परं तापसेषु भक्तिमान् कुलपतिः श्याममुखो दृष्टः। व्यवहारिणा पृष्टम्—'कुतः कृष्णमुखा यूयम् ?' कुलपतिना सर्वं स्वरूपं कथितम्। व्यवहारिणोक्तम्—'तर्ह्ययं बालो मम समर्प्यतां यथा नवप्रसूतायै निजपत्न्यै अर्पयामि एनं बालकम्। तस्याग्रेऽपि पुत्री उत्पन्नाऽस्ति। अतोऽसौ बालको बालिका च सुखेन स्तन्यपानं कुर्वन्त्यौ वृद्धिं यास्यतः।' कुलपतिनाऽर्पितः पुत्रो देवधरव्यवहारिणे। व्यवहारिणा[1] निजपरिवारस्याग्रे इति कथितम्—'मम पत्न्यां पुत्रः पुत्री च युग्ममुत्पन्नम्।' पुत्रस्य अमरदत्त इति नाम कृतम्, पुत्र्याः सुन्दरीति नाम कृतम्। अन्यदा तत्र वास्तव्येन सागरदत्तपुत्रेण मित्रानन्देन सह अमरदत्तस्य महाप्रीतिर्बभूव। अन्यदा वर्षाकाले तौ द्वावपि उज्जयिन्युद्याने सिप्रानदीतटे सिद्धवटसमीपे क्रीडार्थं गतौ। तत्र तौ मिथ उन्देयकाक्रीडां कुरुतः। यावदमरदत्तः प्रेरयत्युन्देयकां मित्रानन्दः प्रतीच्छति तावद् वटोल्लम्बितशवस्य मुखे सा उन्देयका पतिता। शवो ब्रवीति—'उन्देयका यथा मम मुखे पतिता तथा तवाप्यस्मिन्नेव वटे उल्लम्बितस्य मुखे पतिष्यति।' एतच्छ्रुत्वा मित्रानन्देनामरदत्तं प्रत्युक्तं भीतेन—'बान्धव ! क्रीडया पर्याप्तम्, निजमन्दिरे गच्छावः।' अमरदत्तेनोक्तम्—'यद्येषा उन्देयका शवमुखे गता ततोऽन्यया क्रीडयिष्यावः।' एवमुक्तोऽपि मित्रानन्दो न क्रीडां करोति। ततो द्वावपि निजनिजगृहे गतौ। भुक्तोत्तरं द्वावप्येकत्रोपविष्टौ। अमरदत्तेनोक्तम्—'त्वं कथं श्याममुखो दृश्यसे ?' मित्रानन्देन सकलं स्वरूपं कथितम्। अमरदत्तेनोक्तम्—'बान्धव ! शवो न भाषते, परन्त्वेषा व्यन्तरक्रीडा। अस्तु सत्यमथवाऽसत्यम्, पौरुषं कृत्वा एषोऽन्तरायो हन्यते, यथा पूर्वं ज्ञानगर्भेणोद्यमं कुर्वता स्वकष्टं वारि-

1. व्यवहारिणा is missing in Z.

तम् ।' ततो मित्रानन्देनोक्तम्—'अमरदत्त ! कोऽयं ज्ञानगर्भः ?' अमरदत्तोऽब्रवीत् । "अत्रैव भरते चम्पा नाम्नी महापुरी । तत्र जितशत्रुर्नामा नृपः । ज्ञानगर्भनामाऽमात्यः । सुबुद्धिनामाऽमात्यस्य वृद्धपुत्रः । अन्येऽपि बहवः पुत्राः सन्ति । अन्यदा सभायामुपविष्टे राज्ञि कश्चिदागामिवेदको महानैमित्तकः समागतः । राज्ञाऽऽसनं दापितम्, पृष्टश्च—'वद, किं नु वेत्सि ? अहो नैमित्तिक !' तेन कथितम्—'राजन् ! अष्टाङ्गनिमित्तज्ञोऽहम् ।' राज्ञोक्तम्—'तर्हि पक्षमध्ये एतेषां सभ्यानां किं किं भवति ।' तेन विचार्योक्तम्—'पक्षमध्येऽस्य ज्ञानगर्भस्य मन्त्रिणः सकुटुम्बस्य मृत्युर्भविष्यति ।' तच्छ्रुत्वा सभां विसृज्य ज्ञानगर्भो नैमित्तिकेन सह गृहे गतः । तत्र सव्यक्तं पृष्टम् । नैमित्तिकेन कथितम् । 'तव वृद्धपुत्रान्मारिर्भविष्यति' इति श्रुत्वा दैवज्ञं सत्कृत्य विससर्ज । तत् स्वरूपं वृद्धपुत्राग्रे निवेदितं मन्त्रिणा । ततः कुलरक्षार्थं मञ्जूषामध्ये आहारनीहारचिन्तां विधाय वृद्धपुत्रमक्षिपत् । तत्र तालकान् दत्त्वा 'मम गृहसारमेतत्' इत्युक्त्वा नृपमुद्रामन्यामदापयत् । ततो राजमन्दिरे मुक्ता सा मञ्जूषा । मन्त्री स्वयं गृहे गत्वा गृहचैत्यान्याराधयितुं प्रवृत्तः । आत्मीयं गृहमश्वैः पत्तिभिः सर्वतोऽपि अरक्षयत् । इतश्च पञ्चदशे दिने समागतेऽन्तःपुरमध्ये दासीमुखेभ्य इति कोलाहलो बभूव । अयं मन्त्रिपुत्रो रत्नवतीकेशपाशं छित्वा याति । ततो 'धावत ! धावत ।' एतच्छ्रुत्वा राजा क्रुद्धस्तं मन्त्रिपुत्रं हन्तुं सेनां प्राहिणोत् । तावद् गृहस्थितेन मन्त्रिणा चमूपतिरेवमुक्तः—'तावत्प्रतीक्षस्व यावत्त्वत्सेवकैर्वृतो राजसमीपं यामि ।' तेन तथा विहितम् । गतो मन्त्री राजसमीपे । विज्ञप्तो राज्ञा—'स्वामिन् ! यावत्तां मञ्जूषामुद्घाटयामि तावद् विलम्बस्व ।' राज्ञाऽनुमतम् । मञ्जूषा उद्घाटिता । तत्र कृपाणीकबरीकरं मन्त्रिपुत्रं ददृशे । मन्त्रिणोक्तम्—'राजन् ! पूर्वभववैरिणः कस्यापि व्यन्तरस्य चेष्टितम् ।' तच्चेष्टितं दृष्ट्वा तौ स्वामिसचिवौ विरक्तौ जातौ । ततो निजनिजपदे पुत्रं निवेश्य द्वाभ्यां दीक्षा गृहीता ।" ततोऽहमप्युपायेनान्तरायं हनिष्यामि । मित्रानन्देनोक्तम्—'मित्र ! ततोऽयं देशः परित्यज्यते' इति विमृश्य तौ परस्परं गृहस्वापमिषेण निर्गतौ, निरन्तरं यान्तौ कदाचित्पाटलीपुत्रपत्तने बहिरुद्याने गतौ । तत्र महान्तं प्रासादमेकं ददृशतुः । तत्रामरदत्त-

कुमारेणैका शालभञ्जिका दृष्टा । तामतिरूपां विलोकयन् स कन्दर्पबाणैः पीडितः गन्तुं पदमपि न शक्नोति। अमरदत्तस्तां तथाविधां दृष्ट्वा चिन्तयति —'किमेषा देवाङ्गना काचित् कस्यापि शापेन पाषाणत्वं गता—'इत्थं चिन्तां कुर्वाणं कुमारं मित्रानन्दोऽवदत्—'मित्र! नगरमध्ये गम्यते।' अमरदत्तेनोक्तम्—'मित्रानन्द! क्षणमेकं प्रतीक्षस्व यथा शालभञ्जीरूपं विलोकयामि' इत्युक्ते मित्रानन्दः स्थितः। क्षणान्तरे मित्रानन्देन पुनरुक्तम्—'बान्धव! उत्तिष्ठ नगरमध्ये यावः।' ततोऽमरदत्तकुमारेण लज्जां विमुच्योक्तम्—'मित्र! इमां शालिभञ्जिकां मोक्तुं न शक्नोमि। यदि त्वं बलान्मोचयसे ततो निश्चितं मम प्राणा यास्यन्ति'इति श्रुत्वा मित्रानन्दो रुरोद। अमरदत्तोऽपि रुरोद। इतश्च तत्र वास्तव्यो रत्नसागरनामा श्रेष्ठी तत्र प्रासादे समागतस्तेन पृष्टौ—'किमर्थं शोकाकुलौ युवाम्? मित्रानन्देन यथा तथाऽमरदत्तस्य स्वरूपं श्रेष्ठिनोऽग्रे निवेदितम्। व्यवहारिणा चिन्तितम्—'अहो कन्दर्पस्य माहात्म्यं विजृम्भते। पाषाणपुत्रिकायामपि अस्य मनसि विषयवाञ्छा।' मित्रानन्देन श्रेष्ठी पृष्टः—'स्वामिन्! केनायं प्रासादः कारितः? कः कर्ता? कस्येदं विज्ञानकौशलम्? एषा पुत्रिकाऽऽत्मविज्ञानेन कृताऽथवा कस्याश्चित्प्रतिच्छन्दो विहितः।' श्रेष्ठिनोक्तम्—'एष प्रासादो मया कारितः। सोपारपुरवास्तव्येन सूरदेवसूत्रधारेण कृतः। अहं तत्र यास्यामि।' मित्रानन्देनेत्युक्तेऽमरदत्तो जगाद—'त्वां विना प्राणान् धर्तुं न क्षमोऽस्मि'। ततो मित्रानन्देन मासद्वयावधिश्चक्रे। मित्ररक्षार्थं रत्नसारस्य शिक्षा दत्ता। ततो महासमुद्रमुल्लङ्घ्य सोपारपुरे गतो मित्रानन्दः। तत्र दिव्यवेषं कृत्वा गृहीतोपायनो गतः सूत्रधारगृहे। सूत्रधारेण तस्य विशेषभक्तिः कृता। पृष्टं समागमनकारणम्। मित्रानन्देनोक्तम्—'अहमेकं देवप्रासादं कारयितुकामोऽस्मि। अतस्तव समीप आगतः। ततो दर्शय कञ्चित्प्रासादप्रतिच्छन्दम्?' सूत्रधारो जगाद—'पाटलीपुरस्योद्याने यः प्रासादो विद्यते स मया विनिर्मितः। अयं प्रतिच्छन्दः।' मित्रानन्देनोक्तम्—'तत्र या पाषाणमयी पुत्रिका साऽऽत्मबुद्ध्या कृता, किं वा कस्याश्चित् प्रतिच्छन्दो विहितः? सूत्रधारेणोक्तम्—'उज्जयिन्यां श्रीमहासेनराज्ञः पुत्री रत्नमञ्जरी, तस्या रूपम्, नात्र मे बुद्धिकौशलम्।' इति श्रुत्वा 'शुभमुहूर्तं दृष्ट्वा एष्यामि'इत्युक्त्वा मित्रानन्दः समागत उज्जयिन्याम्। तत्र सन्ध्या-

समये वेश्यागृहे गतः । तत्र स्थितेन मित्रानन्देन रात्रिसमये पटहाघोषणं श्रुतम्—'यः कोऽपि एनं दोषेण मृतं नरं प्रभातं यावद् रक्षति ईश्वरः श्रेष्ठी दीनाराणां सहस्रमेकं ददाति' इति श्रुत्वा मित्रानन्देन पुरुषः पृष्टः—'किमर्थं रक्ष्यते शवः ?' तेनोक्तम्—'दुःखेन रक्ष्यतेऽयं शवो मारितः ।' तच्छ्रुत्वा मित्रानन्दो धनार्थी पटहं पस्पर्श । दीनाराणां पञ्चशतीं पूर्वं जगृहे । ततो रात्रौ शवस्य रक्षणं कृतम् । प्रभाते शेषदीनारार्धमदत्त्वा बलादपि गृहीतः शवो बन्धुभिस्तस्य । मित्रानन्देनोक्तम्—'एतदन्यायस्वरूपं राज्ञोऽग्रे निवेदयिष्यामि ।' ततश्च दीनारशतेन भव्यवेषो विहितः । वसन्ततिलका नाम वारमुख्या । तस्या गृहं ययौ । तत्र दीनाराणां चतुश्शती वसन्ततिलकामातुः समर्पिता । ततः सगौरवं स्नानभोजनसामग्रीं कारितः । ततो मित्रकार्यकरणार्थं कामभोगेषु पराङ्मुखो रात्रिप्रहरत्रयं मित्रानन्दो निर्विकारं स्थितः । ततो वृद्धवेश्यया भणितो मित्रानन्दः—'मुधा मत्पुत्रीं किं विडम्बयसि ? किं मम पुत्री सस्नेहा न, अथवा न सुरूपा यदेनां नालापयसि ?' इत्युक्ते मित्रानन्देनोक्तम्—'मातः ! सर्वं तव कथितं करिष्यामि । किन्तु त्वां पृच्छामि कन्यान्तःपुरे तव गतिरस्ति किं वा नास्ति ? तयोक्तम्—'एषा मम पुत्री नित्यं कन्यान्तःपुरे याति । रत्नमञ्जरी मम पुत्रीसखी वर्तते ।' ततो मित्रानन्देनोक्तम्—'भद्रे ! तत्र कन्याऽन्तःपुरे गत्वा सा रत्नमञ्जरी एवं वाच्या यत् तव सन्देशात्तव प्राणप्रियतमेनामरदत्तेन प्रेषितः ।' तच्छ्रुत्वा सा वृद्धवेश्या हृष्टा जाता, स्वयमेव कन्यान्तःपुरे गता । तां दृष्ट्वा रत्नमञ्जर्या पृष्टम् । 'मातः ! सहर्षोत्कर्षेवाद्य दृश्यसे ।' तयोक्तं तस्य धूर्तस्य चेष्टितं सर्वम् । कुमारी किञ्चिद् हृष्टा जाता । कन्ययोक्तम्—'मातः ! तर्हि दर्शय मेलाकारकम् । वेश्या इति श्रुत्वा गृह आगता । मित्रानन्दस्याग्रे तत्स्वरूपं कथितम् । ततो रात्रिविभागे तेन सह गता सिंहद्वारम् । मित्रानन्दस्याग्रे उक्तम्—'वत्स ! अस्मिन् सप्तप्राकारपरिवेष्टिते रत्नमञ्जरीमन्दिरे कथं

१. The portion beginning with ततो and ending with भणितो is missing in Z.

यास्यसि?' ततोऽङ्गुल्यग्रेण वेश्यया रत्नमञ्जरीमन्दिरं दर्शितम्। ततश्च विद्युत्फालकिरणं दत्त्वा सप्त प्राकारान् उल्लङ्घ्य कन्यामन्दिरे गतः। तत्र गवाक्षे चटितो रत्नमञ्जरीं दृष्टवान्। 'एषः कोऽपि वीरपुरुषो यस्यैवंविधं बलम्।' वेश्या इति चिन्तयन्ती गृहे गता। कन्याप्यायान्तं वीरपुरुषं दृष्ट्वा विस्मयप्रपन्ना जाता। 'किं करोत्ययम्' इति कपटेन सुप्ता। इतश्च मित्रानन्दः छुरीमाकृष्य तस्या दक्षिणजङ्घायां लाञ्छनं चकार। ततश्च वामहस्तात् कङ्कणं जहार। पुनर्येन पथाऽऽगतस्तेनैव मार्गेण वेश्यागृहे समागतः। कन्यापि स्वं निनिन्द यद् 'अनेन वीरपुरुषेणाहं नालापिता।' सकलामपि रात्रिं जजागार। रात्रिप्रान्ते सुप्ता। इतश्च प्रभातकालं वंशाग्रे पूलकं धृत्वा राज्ञः सिंहद्वारे फूत्कारपूर्वं प्राप मित्रानन्दः। प्रतीहारेण विज्ञप्तो राजा। मित्रानन्द आकारितः पृष्टश्च—'कथं भोः! उन्मना दृश्यसे?' मित्रानन्दो व्यवहारिणः पराभवं निवेदयामास। राज्ञा श्रेष्ठी आकारितः। राज्ञोक्तम्—'कथमस्य देयं द्रव्यं न ददासि?' श्रेष्ठिनोक्तम्—'दिनत्रयं यावत् शोके निपतितो लोकयात्रया स्थितोऽहम्, ततो मया न दत्तमस्य देयं द्रव्यम्। अतो दास्यामि।' इत्युक्त्वा श्रेष्ठी गृहे गतः। राज्ञा मित्रानन्दः पृष्टः—'त्वया केन प्रकारेण मृतको रक्षितः?' मित्रानन्देनोक्तम्—'देव! गाढं परिकरं बद्ध्वा छुरिकामाकृष्य दिशो विलोकयन्नहं सावधानोऽस्थाम्, तावत् प्रथमप्रहरे शृगालीवर्गः समागतः। द्वितीयप्रहरे कराला वेतालाः समागताः। तृतीयप्रहरे शाकिनीवर्गः समागतः। ततश्चतुर्थप्रहरे रम्यवेषा एका नायिका शवसमीप आगता। मया सा मारिरिति ज्ञात्वा वामकरे धृता। ततो मम हस्तात् सा नष्टा। नश्यती सा मया दक्षिणजङ्घायां छुरिकया लाञ्छिता। तस्या नश्यन्त्या मम करे कङ्कणं स्थितम्।' राज्ञोक्तम्—'तर्हि कङ्कणं दर्शय।' मित्रानन्देन कटीप्रदेशादाकृष्य तत्कङ्कणं राज्ञः करे मुक्तम्—'राज्ञा स्वनामाङ्कितं रत्नमञ्जरीकङ्कणं दृष्टम्। राजा कृष्णमुखो जातः। चिन्तितम्—'अमृते विषमुत्पन्नम्, यदस्या रत्नमञ्जर्या मारिघोषणा जाता।' ततश्च राजा रत्नमञ्जरीमन्दिरे गतः। तत्राच्छवस्त्रपरिवृतां निद्राभरसुप्तां वामकरे कङ्कणरहितां दक्षिणजङ्घायां बद्धपट्टबन्धां रत्नमञ्जरीं विलो-

1. The syllables ता। सकलाम are missing in Z.

कितवान् । ततो राज्ञा चिन्तितम्—'अहमेवैनां शाकिनीवत् मम कुलकलङ्किनीं स्वयं गृह्णामि' इति विमृश्य पुनर्निजावासे समागतः। राज्ञा मित्रानन्दस्याग्र उक्तम्—'यथा शवरक्षणे तव साहसं तथाऽन्यदपि किञ्चिन्मन्त्रादिकं जानासि'? तेनोक्तम्—'मान्त्रिकोऽहम्। राज्ञोक्तम्—'या त्वया रजनीचतुर्थप्रहरे नायिका दृष्टा सा मारिकलङ्किता ममैव पुत्री। ततो यदि तव शक्तिरस्ति तदेनां गृहाण, अथवा निगृहाण।' मित्रानन्देनोक्तम्—'एकवेलं तां साध्यामसाध्यां विलोकयिष्यामि।' राज्ञोक्तम्—'एवं भवतु।' ततो राजादेशाद् रत्नमञ्जरीमन्दिरे गतो मित्रानन्दः। ततो रत्नमञ्जर्या तातादेशात् तमायान्तं वीक्ष्याऽऽसनादिभिस्तस्य भक्तिश्चक्रे। अथ मित्रानन्देन राजपुत्री एवमुक्ता—'भद्रे! शृणु वृत्तान्तम् – यत् पाटलीपुरपत्तने मम प्राणमित्रम् अमरदत्तनामा कुमारो नगरोद्याने प्रासादे तव रूपपाषाणपुत्रिकाविलोकनेन मोहितोऽस्ति, तवालाभान्मरणं प्राप्नोति, तस्य महामित्रं मित्रानन्दो नामाहं तव निमित्तमिहागतः। मया तस्यामरदत्तस्य कृते राज्ञोऽग्रे तव मारिकलङ्को दत्तोऽस्ति। रात्रौ मयैव तव वामकरात्कङ्कणमपहृतम्। दक्षिणजङ्घायां मयैव छुरिकया सह लाञ्छनं कृतम्। अथ पश्चादहं तव प्रियं करोमि तत् सर्वं कर्तव्यम्। यदि त्वमेवं न करिष्यसि तदाऽहमत्रैव मरिष्यामि, अमरदत्तस्तत्र मरिष्यति। तव मारिकलङ्क उपस्थित एव। अतो यद् रोचते तत् कुरु।' एवं श्रुत्वा निजमनसि विमृश्य रत्नमञ्जरी मित्रानन्दं प्रति प्राह—'हे मित्रानन्द! यस्तव मित्रममरदत्तकुमारः पाषाणमय्यां मय्येवमनुरागवान् वर्तते, ततो मया निजप्राणैरपि त्वं स च रक्षणीयौ।' मित्रानन्दोऽवदत्—'यद्येवं ततो यदा राजा त्वां मम समर्पयति तदा त्वया फूत्कर्तव्यम्' इति शिक्षां दत्त्वा मित्रानन्दो राज्ञः सभायां समागतः। राज्ञोक्तम्—'भो मान्त्रिक! अस्ति तव साध्या किं वा न?' तेनोक्तम्—'अस्ति मम साध्या सा स्त्री, पुनरेकोऽश्वः समर्प्यताम्, सूर्योदयादर्वाक् तां देशान्तरं नयामि' इत्युक्ते राज्ञा भयभीतेन केशैराकृष्य फूत्कारं कुर्वती तस्य समर्पिता। मित्रानन्दोऽपि 'हुं फट्' इति मन्त्रोच्चारणपूर्वकं रत्नमञ्जरीं तुरङ्गम आरोप्य सन्ध्यासमये निर्गतः। मार्गे गच्छन्त्या रत्नमञ्जर्या मित्रानन्दं प्रत्युक्तम्—'स्वामिन्!

मित्रकलत्रेण सहैकस्मिन् वाहन आरोढुं न युज्यते।' तेनोक्तम्—'मम त्वं पुत्रीस्थाने वर्त्तसे। ततः किमेकवाहने आरोढुं न युज्यते ?' इति श्रुत्वा तया चिन्तितम्। 'यस्यायं मित्रः स धन्य' इति चिन्तयन्ती तेन मित्रानन्देन पाटलीपुरोद्याने नीता। इतश्चामरदत्तो मासद्वयावधौ सम्पूर्णे मित्रदुःखेन रत्नसारश्रेष्ठिनं काष्ठानि याचते। ततश्च रत्नसार-श्रेष्ठिना सज्जितेषु काष्ठेषु पौरलोकेनामरदत्त एवमुक्तः—'अद्यतनीयं दिवसं विलम्बस्व कथञ्चन।' ततोऽमरदत्तो लोकवाक्यात् स्थितः। तावत् लोकेन अमरदत्तस्याग्रे इत्युक्तम्—'कोप्यश्ववारः समेति। सर्वे यावत्ससम्भ्रमं विलोकयन्ति तावन्मित्रानन्दोऽमरदत्तसमीपे समागतः। अत्र द्वयोर्मित्रयोर्महान् हर्षः। ततश्च तस्यैवाग्नेः सात्तिकममर-दत्तस्य पाणिग्रहणं बभूव। रत्नसारश्रेष्ठिना पौरलोकेन च तौ परस्परं व्याख्यातौ। इतश्च रात्रिविभागे तस्य नगरस्य स्वामी अपुत्रो मृतः। ततो मन्त्रिवर्गेण पञ्च दिव्यानि प्रतिष्ठितानि। गजेन्द्रो बाह्योद्याने समागतः। तत्रामरदत्तकुमारोऽभिषिक्तो गजेन्द्रेण, निजपृष्ठे आरो-पितः कुमारः। ततश्च हयो हेषारवं चक्रे, चामराभ्यां वीजितः, शिरसि छत्रं धृतम्। 'जयति अमरदत्तो राजा' इत्याकाशे देववाणी बभूव। ततो नगरे महान्त उत्सवाः सञ्जाताः। अमरदत्तराज्ञो नगरमध्ये प्रवेशमहोत्सवो बभूव। धवलगृहे सम्प्राप्तः। ततोऽमात्यसामन्ताद्यैः राज्येऽभिषिक्तः। अमरदत्तराज्ञा मित्रानन्दो निजमन्त्रीश्वरश्चक्रे। रत्नमञ्जरी अन्तःपुरसारं बभूव। रत्नसारश्रेष्ठी श्रेष्ठिपदे कृतः। एवं राज्यं परिपालयति। अन्यदा बहुषु दिवसेषु गतेषु मित्रानन्देन राजा एवं विज्ञप्तः—'देव! तच्छववाक्यं पीडयति माम्। ततः प्रसादं कुरु, मां दूरे विसृज।' अत्याग्रहेणामरदत्तराज्ञाऽऽत्मसेवकैः परिवे-ष्टितो मित्रानन्दो वसन्तपुरे प्रहितः।

'तस्य शुद्धावनायान्त्यां दिनैः कतिपयैर्नृपः।
मानुषेण व्यधात् शुद्धिं प्रवृत्तिः काप्यभून्नतु ॥ १ ॥'

ततो राज्ञा चिन्तितम्—'किं जातं मम मित्रस्य ? तज्ज्ञानिनः समीपे मित्रनिवृत्तिं पृच्छामि।' यावद् राजा एवं चिन्तयति तावदु-द्यानवनपालकपुरुषेण विज्ञप्तः—'स्वामिन्! अद्योद्यानभूमौ चतुर्ज्ञानी 'धर्मघोषसूरिः' इति नामा मुनीश्वरः समागतोऽस्ति, तच्छ्रुत्वा राजा

सहर्षो बभूव। रत्नमञ्जरीसहितो वन्दनाय जगाम। तं नमस्कृत्य तस्य मुखाद्देशना श्रुता। इतश्च तत्रैव वास्तव्येनाशोकदत्तश्रेष्ठिना गुरून् प्रणम्योक्तम्—'भगवन्! केन कर्मणाऽस्मिन् भवे मम पुत्री सरोगा वर्तते? तत् किं कारणम्?' गुरुभिः सा तत्रानायिता, दृष्टिमात्रावलोकनाद् आरोग्या बभूव। ततो व्यवहारिणा पृष्टम्—'भगवन्! पूर्वभवेऽनया मम पुत्र्या किं कर्म कृतम्।' गुरुः प्राह—"पूर्वभवे भूतसालनगरे भूतदेवनामा व्यवहारी, तस्य कुन्तिमती भार्या। अन्यदा मार्जारेण पीयमानं दुग्धं दृष्ट्वा कुन्तिमत्या निजवधूं प्रत्येवं दुष्टवचनमुक्तम्—'किं त्वं शाकिनीभिर्गृहीता, यत्त्वं दुग्धं न रक्षसि?' तच्छ्रुत्वा सा वधूस्तत्कालशाकिन्या छलिता। ततो नरेन्द्रप्रभृतिलोकैः सा शाकिनीपार्श्वात् मोचिता। श्रेष्ठिपुत्रवधूः पुनः स्वस्था जाता। ततः प्रभृति सा कुन्तिमती कालजिह्वा इति रूढिं गता। ततो जनापवादं श्रुत्वा वैराग्यपरा जाता। कुन्तिमती दीक्षां गृहीत्वा स्वर्गे गता। ततश्च्युत्वा एषा तव पुत्री अभूत्। ततः पूर्वभवकर्मवशादाकाशदेवीभिर्गृहीता। मम दर्शनात् साम्प्रतमेनां विमुच्य आकाशदेव्यो नष्टा इत्युक्ते तस्या जातिस्मरणं जातम्। पूर्वभवो दृष्टः। वैराग्यमुत्पन्नम्। दीक्षा प्रार्थिता, गुरुभिर्न दत्ता। अद्यापि तव भोगफलं वर्तते, ततो गृहस्थधर्मं परिपालयति।" अस्मिन्नवसरे अमरदत्तराज्ञा मित्रानन्दवृत्तान्तः पृष्टो गुरुसमीपे। ततो गुरुभिरादिष्टम्—"शृणु राजन्! तदा त्वत्सकाशात्तव सुभटैः परिवेष्टितो मित्रानन्दो वसन्तपुरं प्रति चचाल। एकस्मिन् वने यावदुत्प्रयाणं कृतं तावद् भिल्लानां धाटी पतिता। सर्वे सुभटा जीवितव्यरक्षणाय धाटीभयान्नष्टाः। मित्रानन्दोऽप्येकं दिशं प्रति चलितः। इतश्च मित्रानन्दो वनमध्ये भ्रमित्वा एकस्मिन् सरोवरे गतः। तत्र जलं पीत्वा एकस्य वटवृक्षस्य तले सुष्वाप। तावत्तस्य वटवृक्षस्य कोटरात्सर्पो निस्सृतः। तेन दष्टो मित्रानन्दः। ततश्च तत्र कोऽपि तापसः समायातः। तेन विषवेगेन मूर्च्छितो मित्रानन्दो जीवापितः। तापसः स्वस्थानं गतः। मित्रानन्दोऽपि तव समीप आगच्छन् मार्गे तस्करैर्गृहीतः। ततश्च तस्करैरपि विक्रीतः केषाञ्चिन्नौवित्तानां पार्श्वे। तेऽपि नौवित्तकास्तं मित्रानन्दं पारसकूले

१. गृहीत॰ for गृहस्थ॰ A and Z.

गृहीत्वा गताः। ततश्च पारसकूलात्तं सार्थं गृहीत्वा देशान्तरं गन्तुकामास्ते नौवित्तका उज्जयिन्यां समागताः। तावत्सा नगरी चौरभयेन व्याकुला वर्तते। सर्वत्र राजादेशात्तलारकाः परिभ्रमन्ति। ततश्च मित्रानन्दो नष्टस्तेभ्यः सार्थपुरुषेभ्य उज्जयिन्यां दुर्गस्रोतसः प्रविशन् तलारकपुरुषैर्दृष्टः, चौर इति भणित्वा गाढतरं रात्रौ बद्धः। तैरपि निजस्वामिने तलारकाय समर्पितः। तेनाभिक्रुद्धेन तस्मिन्नेव वटे उल्लम्बितो मित्रानन्दः। मृतश्च। इतश्च गोपानां क्रीडतां मित्रानन्दस्य मुखे उन्देयका प्रविष्टा।" अमरदत्तो राजा मुनिमुखात् मित्रानन्दस्य मृत्युं श्रुत्वा उच्चैःस्वरं चक्रन्द। रत्नमञ्जर्यपि चक्रन्द। मुनीश्वरेण वैराग्यकारिणीभिर्देशनाभिरमरदत्तो राजा स्वस्थीकृतः। 'राजन्! मा कुरु शोकम्, जीवानां विचित्रा कर्मगतिः।' इतश्च अमरदत्तराज्ञा पृष्टम्—'भगवन् कुत्रोत्पन्नो मित्रानन्दस्य जीवः।' गुरुभिः शुभध्यानगतिं तस्य विज्ञाय राजानं प्रत्युक्तम्—'राजन्! तवैव कुले रत्नमञ्जर्युदरे उत्पन्नो मित्रानन्दजीवः कमलगुप्तनाम्ना तव पुत्रो भविष्यति।' इतश्च राज्ञा मित्रानन्दस्य पूर्वभवं पृष्टा मुनयः—'भगवन्! पूर्वभवे मित्रानन्दजीवेन किं कर्म विहितं यदस्मिन् भवे तस्यैवंविधं दुःखं जातम्।' गुरुभिरुक्तम्—"शृणु राजन्! पूर्वभवेऽस्मिन् भरते साकेतपुरे क्षेमङ्करो नाम कौटुम्बिकः। तस्य सत्यश्रीनाम्नी गृहिणी, चण्डसेननामा कर्मकरः सर्वकर्मसु निपुणः। अन्यदा चण्डसेनकर्मकरः क्षेत्रं[2] रक्षति। इतश्चान्यदा तस्य क्षेत्रसमीपेऽन्यस्य कस्यापि क्षेत्रे कार्पटिकमेकं धान्यं गृह्णन्तं निरीक्ष्य चण्डसेनेनोक्तम्—'हे पुरुषाः! अयं चौरोऽस्य वृक्षस्य शाखायामुल्लम्ब्यताम्। परं तस्य क्षेत्रस्य स्वामिना कृपया तत् न कृतम्। तस्य कटुवचनेन कार्पटिकचित्तेऽतीव दुःखं बभूव। चण्डसेनः सन्ध्यासमये गृहे आगतः। चण्डसेनेन तत् कर्म बद्धम्। अन्यदा सत्यश्रिया निजवध्वा भुञ्जानया गले विलग्नं कवलं वीक्ष्य 'अरे! त्वं राक्षसीसदृशा, यत् स्थूलैः कवलैर्भोक्ष्यसे' इत्युक्ते वधूर्निजचित्ते दूयिता। अन्यदा चण्डसेनेन निजस्वामी क्षेमङ्करनामा एवं विज्ञप्तः। निजसगीतानां मिलनाय यामि। तेन क्रुद्धेनैवमुक्तम्—

१. तलरक्षक॰ Z. तलारक्षक A. २. A. adds सर्वकर्मसु निपुणः before क्षेत्रं।

'तव स्वजनानाममिलनमस्तु ।' एकदा ताभ्यां क्षेमङ्करसत्यश्रीभ्यां शुद्धान्नैर्मुनिः प्रत्यलाभ्यत। चण्डसेनोऽपि पार्श्वस्थितस्तावन्वमोदत। मुनौ गते त्रयाणामुपरि विद्युत्पपात। ततस्त्रयोऽपि सौधर्म्ये गताः। ततश्च्युत्वा क्षेमङ्करजीवो भवान् अमरदत्तो जातः। सत्यश्रीजीवो रत्नमञ्जरी जाता। चण्डसेनजीवो मित्रानन्दो बभूव। ततो दुर्वाक्य-दानेन मित्रानन्दो वटशाखायामुल्लम्बितः। यत् सत्यश्रिया पूर्वभवे वध्वा राक्षसीदुर्वाक्यं दत्तं ततोऽस्मिन् भवे रत्नमञ्जरी मारिकलङ्केन दूषिता। यत् त्वया पूर्वभवे कर्मकरस्याग्रे इत्युक्तम्—'स्वजनानां मा मिलितं तव', अतोऽस्मिन् भवे तव स्वजनैः सह विरहो बभूव।' इति पूर्वभवं श्रुत्वा ताभ्यां श्रावकव्रतानि गृहीतानि। अमरदत्तेन पुनर्मुनि-र्भाषितः—'भगवन्! शवः किं भाषते?' मुनिनोक्तम्—'कार्पटिकजीवो मृत्वा व्यन्तरो जातः। ततः पूर्ववैरेण शवमुखेऽवतीर्य मित्रानन्दस्याग्रे उक्तम्।' इति श्रुत्वा सर्वेऽपि स्वस्थानं गताः। राजाऽपि रत्नमञ्जरीसहितो राज्यं करोति। अन्यदा रत्नमञ्जरी पुत्रं सुषुवे। कमलगुप्त इति नाम कृतम्। शास्त्राभ्यासं कुर्वन् क्रमेण तारुण्यवयो बभूव कमलगुप्तः कुमारः। अन्यदाऽमरदत्तराज्ञा रत्नमञ्जरीसहितेन पुत्रं राज्ये निवेश्य तस्यैव गुरोः समीपे दीक्षा गृहीता। तपस्तप्त्वा क्रमेण सिद्धिं यास्यति।

मज्जं विसयकसाया निद्दा विकहाय पंचमी भणिया।
एए पंच पमाया जीवं पाडंति संसारे ॥ ३ ॥'

अतोऽमरदत्तमित्रानन्दयोः कथां निशाम्य कषायः परिहर्तव्यः॥

इति कषायविषयेऽमरदत्तमित्रानन्दयोः कथानकम् ॥

## दानधर्मविषये कथा।

दानं शीलं तपो भावो धर्मश्चायं चतुर्विधः।
ये पालयन्ति भावेन ते जीवाः पुण्यभाजनम् ॥ १ ॥

दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम्।
दानेन कीर्तिर्भवतीन्दुशुभ्रा दानात्परं नो परमस्ति वश्यम् ॥ २ ॥

कुलं गतमलं कामानुरूपं रूपमव्ययम्।
विश्वभोग्यं च सौभाग्यं श्रीविलासो विकस्वरः ॥ ३ ॥

अनवद्या पुनर्विद्या कीर्तिः स्फूर्तिमती सती ।
अभिरामो गुणग्रामः सर्वं दानादवाप्यते ॥ ४ ॥

पक्षपातोऽपि धर्मस्य जयाय ललिताङ्गवत् ।
सद्भृत्यसज्जनस्येव क्षयाय पुनरन्यथा ॥ ५ ॥

जम्बूद्वीपेऽत्र भरते श्रीवासं नाम पत्तनम्। तत्र नरवाहनो नाम राजा। तस्य कमला नाम्नी पट्टमहादेवी। तयोर्मातृपित्रोर्नेत्रानन्दनो ललिताङ्ग इति नाम नन्दनोऽजनि। सर्वलक्षणसम्पूर्णः सकलकलाकुशलोऽतीव विद्यावान् विवेकवान् गुणज्ञः स क्रूरः बालोऽपि विदुषां मनसि उवास। देवगुरुपितृमातृप्रमुखसर्वस्वजनानां भक्तिमान्, परमतीव दानेश्वरः, याचके दृष्टे महाप्रीतिः।

गलितेव तिथिस्तस्य चित्ते मास इवाधिकः ।
तद्दिनं गणनां नैति यस्मिन्नार्थिसमागमः ॥ ६ ॥

अथ सज्जन इति नाम सेवकस्तस्य मित्रोऽभवत्। नाम्ना सज्जनः, परन्तु परिणामेन दुर्जनः। अन्यदा ललिताङ्गनाम्ना तेन राजकुमारेण पित्रा प्रसादीकृतं बहुमूल्यमाभरणं याचकाय दत्तम्। सज्जनेन राज्ञोऽग्रे ललिताङ्गस्य दानावगुणः कथितः। राजा तस्य वचसा कोपं गतः। कुमारमाकार्य पूर्वं सामवाक्यैः कथितम्, किन्तु प्रौढं पुत्रोऽपि मित्रवत्। यतः—

लालयेत्पञ्चवर्षाणि दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ ७ ॥

'वत्स! किं न श्रुतं भवता?

तरुदाहोऽतिशीतेन दुर्भिक्षमतिवर्षणात् ।
अतित्यागादनौचित्यमति कुत्रापि नेष्यते ॥ ८ ॥

वत्स! अतः कारणात्त्वयाऽल्पतरो व्ययः कार्यः।' कुमारः प्राह—'तात!

गरीयसाऽपि त्यागेन न याति निधनं धनम् ।
ग्रामेणोदञ्च्यमानेऽपि महाकूपे जलं यथा ॥ ९ ॥

तथाप्यहं राजन्! तन्न करिष्ये यद्राज्ञोऽप्रियम्। पूज्यादेशः

प्रमाणम्' इत्युक्त्वा कुमारः स्वगृहं ययौ। कुमारोऽतिदानान्निषिद्धः। याचकाः कथयन्ति—'कुमार! किमेतत्?

एष चिन्तामणिर्भूत्वा देव! दानेन भूतले।
पाषाण इव संवृत्तस्त्वदिदानीं कथं भवान्॥ १०॥
कलामिन्दुः करं दाता धारां धाराधरो यदि।
सङ्कोचयिष्यते तर्हि जीविष्यति कथं जगत्॥ ११॥
सङ्ग्रहैकपरः प्राप समुद्रोऽपि रसातलम्।
दाता तु जलदः पश्य भुवनोपरि गर्जति॥ १२॥
समुद्राः स्थितिमुज्झन्ति चलन्ति कुलपर्वताः।
प्रलयेऽपि न मुञ्चन्ति महान्तोऽङ्गीकृतं व्रतम्॥ १३॥'

कुमार एवं श्रुत्वा पुनर्दानं दातुमारेभे। राज्ञा श्रुतम्। राजमन्दिरमध्ये प्रवेशो रक्षितः। कुमारो मनसि दुःखं चकार।

'व्याधिमालिन्यदारिद्र्यापमानव्यसनागमे।
परदेशं विना नान्यदिह श्रेयो मनस्विनाम्॥ १४॥'

इति निश्चित्य मध्यरात्रौ निर्जने जाते च तुरङ्गममधिरुह्य एकदिशं प्रति चचाल। तस्य मित्रं सज्जनोऽपि सहैव चचाल। मार्गे व्रजतोर्द्वयोरिति संलापो बभूव। कुमारेण कथितम्—'भो सज्जन! ब्रूहि कामपि वार्ताम्।' तेनोक्तम्—'कुमार! पुण्यपापयोः किं श्रेष्ठम्?' कुमारः प्राह—'रे मूर्ख!

अबलाबालगोपालहालिकानामपि स्फुटम्।
इदं हि यज्जयो धर्माद् अधर्मेण पुनः क्षयः॥ १५॥

तेनोक्तम्—'अहं मूर्खः, परं कथय पुण्यपापयोः को धर्मः? किं पापम्?' कुमारः प्राह—

'वचः सत्यं गुरोर्भक्तिः शक्त्या दानं दयार्दिते।
धर्मोऽयमिष्टसंयोगकरोऽनिष्टनिवारकः॥ १६॥

एतस्माद्विपरीतोऽधर्मः।' सज्जनेनोक्तम्—'हे कुमार! धर्मेण क्षयः, पापेनैव जयः, यदिदानीं तव धार्मिकस्यापि दुःस्था ईदृशी अवस्था जाता। ततो धर्मात् कुतो जयः साम्प्रतं पापं कर्तुं युक्तम्।

चौर्यादिना व्यापारेण लक्ष्मीमुपार्जय।' कुमारः प्राह—'सज्जन! एवं मा भण—

अन्यायेन मया लक्ष्मीः, स उद्योतः प्रदीपवान्।
क्षणं प्रकाश्य वस्तूनि निर्वाहे केवलं रजः॥ १७॥

अत्र वने आवां द्वावेव जनौ। को वादे निर्णयं ददाति? यद्यावयोरग्रतो गच्छतोः कोऽपि साक्षी नो धर्माज्जयं कथयिष्यति कुमारस्तदाहमाजीवितान्तं तव किङ्करत्वं करिष्ये।' सज्जनेनोक्तम्—'यदि मम वचः प्रमाणम्, तदाहं तव तुरङ्गाभरणादिकं गृहीष्ये। कुमारेणोक्तम्—'एवमस्तु' इति प्रतिपन्ने गतौ पल्लीग्रामे। तत्र जरातुरा वृद्धपुलिन्दाः पृष्टाः, 'धर्माज्जयः पापाद्वा', दैवयोगात्तैरपि पापादेव जयः कथितः। सज्जनेन कुमारपार्श्वात्तुरगाभरणादिकं जगृहे। ललिताङ्गकुमारोऽपि चरणचारी समेति। शठः सज्जनो वदति—'कुमार! धर्मपक्षपातफलं प्रत्यक्षमनुभूतम्। अधुनापि पापं प्रमाणीकुरु।' कुमारः प्राह—'सज्जन! प्रलयान्तेऽपि नाहं धर्मं त्यजामि, तर्हि धर्मजये नेत्रे हारितव्ये', इत्थं पणबन्धश्चक्रे। यादृक् पूर्वं परित्यक्ता पल्ली प्राप्ताऽग्रे। दैवयोगात्तैर्जरत्पुलिन्दैः पापादेव जयः कथितः। दूरे गत्वा सज्जनेन कुमारोऽभाणि—'देव! निजं वाक्यं पालय। नेत्रे मम समर्प्यताम्।' कुमारेणापि वटतरोस्तले गत्वा धर्माज्जयं ब्रुवता स्वयमेवोद्धृत्य स्वनेत्रे सज्जनाय समर्पिते। सज्जनोऽपि चक्षुषी गृहीत्वा गतः पापी। तत्रैव वटतरोस्तले स्थितस्य कुमारस्य सूर्योऽस्तमितः।

शब्दायमाना विविधाः पक्षिणोऽपि तदापदि।
क्रन्दन्त इव दुःखेन निलीना नीडवेश्मसु॥ १८॥
अत्रान्तरे वटे तत्रैकत्र सम्मिलितास्तदा।
भारुण्डपक्षिणः स्वैरं संलापमिति चक्रिरे॥ १९॥

'भोः पक्षिणः! केन किं किं कौतुकं दृष्टम्।' एकेन पक्षिणोक्तम्—"चम्पायां नगर्यां जितशत्रुर्नाम महीपतिः। तस्य पुत्री पुष्पवती नाम्नी। दैवयोगात् पूर्वभवकर्मवशात् सा नयनाविकला अन्धा पाणिग्रहणयोग्या पितुर्मनसि जीवितशल्यं वर्तते। अन्यदा राज्ञा नगरीमध्ये पटहो दापितः—'यः कश्चिज्जितशत्रोः पुत्र्याः पुष्पवत्या

लोचने औषधबलेन मन्त्रबलेन वा सज्जीकरोति राजा तस्मै निजं राज्यस्यार्द्धं कन्यां च दास्यति।' एकेन लघुपक्षिणा वृद्धपक्षिणः पार्श्वे पृष्टम्—'तात! उपायः कोऽप्यस्ति येनोपायेन तस्या नेत्रे पुनर्नवे भवतः।' वृद्धपक्षिणोक्तम्—'वत्स!

दिवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च।
सञ्चरन्ति महाधूर्ता वटे वररुचिर्यथा॥ २०॥

ततः कारणादधुना मा पृच्छ, प्रभातसमये उपायं कथयिष्यामि।' लघुपक्षी आग्रहं न विमुञ्चति। अत्याग्रहेण पृष्टम्—'कथितं विना त्वां न मोक्ष्यामि।' तेनोक्तम्—'वल्ली वटमूलं वेष्टयित्वा वटोपरि समागताऽस्ति, तदीयरससंसेकाल्लोचने तत्कालं पुनर्नवे भवतः।' एवं तस्य वचः कुमारेण वटमूलस्थितेनाकर्णितम्। प्रथमं तदौषधं स्वलोचनयोः क्षिप्तम्। लोचने निर्मले जाते। चिन्तितं कुमारेण, औषधं गृहीत्वा यास्यामि चम्पानगर्याम्, राजपुत्रीलोचने निर्मले करोमि। ततः पुण्यमौषधं लात्वा एकस्य भारुण्डपक्षिणः पक्षमध्ये प्रविश्य निलीनः। प्रभातसमये ते सर्वेऽपि भारुण्डपक्षिणो गताश्चम्पायां पुरि। पक्षमध्यान्निस्सृत्य नगरीं प्रविष्टः। ततश्च राजकुले जगाम। तत्र गत्वा तेनैवौषधेन राजपुत्रीनेत्रे निर्मलीकृते। राज्ञाऽर्धराज्यं दत्तम्। कुमारी दत्ता। ललिताङ्गकुमारेण परिणीता पुष्पवती अर्द्धराज्यं करोति। कियति काले गते स एव सज्जनो ग्रासमात्रार्थं गृहाद् गृहं रङ्कवद् भ्रमन् राजकुमारसिंहद्वार आजगाम। राज्ञा दृष्टः। 'अथ मम परममित्रं सज्जन उपलक्षितः।'

अथ त्याजितदुर्वेषं कारितस्नानभोजनम्।
परिधापितसद्वस्त्रं कुमारस्तमभाषत॥ २१॥
'अद्य मे सफलं राज्यं यत्र दुःखसखो भवान्।
समाजगाम तत् सौख्यं भुङ्क्ष्व निश्चिन्तमानसः॥ २२॥'

कुमारेण सज्जनस्य महासनं दत्तम्। एकदा एकान्ते पुष्पवत्या पृष्टम्—'नाथ! इयं कल्ये सज्जनेन सह महती प्रीतिर्वर्तते। कोऽयं सज्जनः?' कुमारेणापि आमूलचूलं देशान्तरादारभ्य सर्वं याथातथ्यं कथितम्। कुमार्या उक्तम्—'नाथ! नायं सज्जनः, किन्तु

दुर्जनः। अनेन साकं प्रीतिः तव न युज्यते। सर्वथाऽयं त्याज्य एवेति विमृश्यामुं विसृज। राजन्! किं न श्रुतम्?

उत्तमैः सह साङ्गत्यं पण्डितैः सह सङ्कथाम्।
अलुब्धैः सह मित्रत्वं कुर्वाणो नावसीदति' ॥ २३ ॥

अत्र हंसवायसदृष्टान्तः।

नाहं काको महाराज! हंसोऽहं विमले जले।
नीचसङ्गप्रसङ्गेण मृत्युरेव न संशयः ॥ २४ ॥

एवमुक्तोऽपि कुमारः सज्जनं न मुञ्चति। यतः—

'महतामप्यहो दैवाद्दुर्वारा नीचसङ्गतिः।
कर्पूरस्य कथं न स्यादङ्गारेण समं रतिः' ॥ २५ ॥

अन्यदा ललिताङ्गश्वशुरेण जितशत्रुराज्ञा एकान्ते सज्जनः पृष्टः। 'कोऽयं ललिताङ्गः कुमारः? अस्य का जातिः?' तेन प्रकटित आत्मस्वभावः। 'राजन्! अहं राजकुमारः। अयं कोरिकपुत्रः।' एवं श्रुत्वा क्रुद्धो राजा। ललिताङ्गमारणाय सेवका आदिष्टाः—'सन्ध्यासमये यो धवलगृहप्रतोलीद्वारमार्गेण समायाति स विनाश्यः।' एवं सन्ध्याकाले प्रेषितं ललिताङ्गस्याऽऽकारणम्। कुमारोऽपि खड्गं गृहीत्वा यावदुत्तिष्ठति तावत्पुष्पवत्या निषिद्धः।

"विश्वासोऽत्र न कर्तव्यस्तन्नरेण विजानता।
नीतौ किं न श्रुतं राजा मित्रं कस्यापि नो भवेत् ॥ २६ ॥

तत् स्वामिन्! तिष्ठन्तु भवन्तः। अस्मिन् कार्ये सज्जनं प्रेषय।' प्रेषितः सज्जनः। राजप्रतोलीद्वारं प्रविशन् मारितः सज्जनः। कुमार्या ज्ञातम्—'मम पिता रुष्टः।' पत्युरग्रे निवेदितम्—'स्वामिन्! सैन्यं सज्जीकृत्वा बहिर्याहि।' तथा कृतम्। जितशत्रुरपि सन्नद्धो बभूव। प्रधानैर्विज्ञप्तो राजा—

'सहसाकारिणं सद्यो मुञ्चन्ति सुखसम्पदः।
इत्यर्थे श्रूयतां देव! जयराज्ञो निदर्शनम्' ॥ २७ ॥

तथाहि—"विन्ध्याचलमहाटव्यां वटवृक्षे शुकद्वयं वसति। शुको जातः। अन्यदा मातृपित्रोर्वने गतयोरङ्गेसलामध्याच्छुको निस्सृतः। स्तोकभूमिं यात्वा शैशवत्वाद् भूमौ पतितः। श्रान्तः केन-

चिन्मुनिना दृष्टः। कृपया जलं पायितः। निजे आश्रमे जगृहे। शुकनास इति नाम दत्तम्। शुकस्य पितरावपि तं पुत्रं गवेषयन्तौ तत्रैवाश्रम आगतौ। अन्यदा कुलपतिना कथ्यमानं शिष्याणामग्रे शुकः शुश्राव—'यत्समुद्रमध्ये हरिमेलो नाम द्वीपस्तस्येशानदिक्कोणे सहकारद्रुमोऽस्ति अमृतसिक्तः। तस्य फलेन दोषरोगजरामुक्तं वपुर्भवति।' उड्डीय ययौ शुकः सहकारफलानयनाय। तत्रैव द्वीपे वलमान आम्रभारेण समुद्रमध्ये पपात। एतत् सागरसार्थपतिना दृष्टम्। गृहीतो जीवापितः। व्यवहारिणा पृष्टः शुकः—'किमिदं फलम् ?' शुकेन स्ववृत्तान्तः कथितः। फलं सागरदत्तस्य दत्तम्। अन्यत्फलं गृहीत्वा पित्रोरर्पितवान्। सागरेण तत्फलं जयपुराधीशस्योपढौकितम्। तस्य फलस्य सम्बन्धो माहात्म्यं च कथितम्। राज्ञा विश्वस्याप्युपकाराय सहकारतरुर्वाटिकायां वापितः। महोत्सवेन पुष्पितः फलितः सह राजमनोरथैः। अन्यदा शकुनिकामुखगृहीतसर्पगरलमाम्रफलस्योपरि पतितम्। विषतापात्तत्फलं सकलमपि पक्कं गलित्वा भूमौ पतितम्। आरामरक्षकेन राज्ञ उपढौकितम्। राज्ञा 'इष्टं धर्मेण योजयेत्' इति कारणात् पुरोहितस्य फलमर्पितम्। तेन पुरोहितेनाप्यप्रक्षालितमेव सहसा भक्षितम्, विपन्नश्च। क्रुद्धेन राज्ञा विषतरुरिति भणित्वा छेदितः। मर्तुकामा देहविकला रोगातुरा अन्धाः कुष्ठिनः सर्वेऽपि जनास्तस्य फलानि तथाऽदन्ति यथा स्पष्टदेहा बभूवुः। राज्ञा तत्स्वरूपं ज्ञातम्। आजीवितावधि सन्तापो बभूव। तथा त्वमपि मा कुरु।"

जयराजकथां श्रुत्वा इतश्च नरवाहनराज्ञः प्रधानैः कुमारानयनायागतैः कुमारस्य कुलादिकं कथितम्। ललिताङ्गपितरौ तत्र समागतौ। श्वशुरो ललिताङ्गकुमाराय निजं राज्यं दत्त्वा प्रव्रज्य त्रिदिवं ययौ। नरवाहनराज्ञा स्वपुत्रो निजनगर आनीतः, अपराधं क्षामितः। 'वत्स! दानप्रभावद्धनं न क्षीयते।' पित्रा ललिताङ्गस्य राज्यं दत्त्वा दीक्षा गृहीता। चारित्रं पालयित्वा दिवं ययौ। ललिताङ्गो राजा राज्यं प्रतिपालयति।

इति ललिताङ्गकुमारकथानकम् ॥

## जीवदयाविषये दामन्नककथा।

जो जीवदयापरंगो परस्स पीडं परिच्चअइ पुरिसो।
वसणं पिऊसवो होई तस्स दामन्नगस्स जहा ॥ १ ॥

अत्रैव भरतक्षेत्रे राजपुरं नाम नगरम्, यत्र नगरे मयूरगणा जिनमन्दिरे वाद्यमानातोद्यध्वनिं श्रुत्वा नृत्यं कुर्वन्ति। तत्र नगरे सुनन्द इति नाम्ना कुलपुत्रको वसति धीवरः। परं स्वभावेन जीवदयापरः। तस्य जिनदासनामा श्रावकः परममित्रं बभूव। अन्यदा जिनदासेन सह सुनन्दो गुरूणां पार्श्वे जगाम। गुरून् वन्दित्वा द्वावप्युपविष्टौ। गुरुभिर्जीवदयाविषये धर्मदेशना कृता—

कल्लाणकोडिजणणी दुरंतदोहग्गदुखनिद्दलणी।
सग्गापवग्गहेऊ इक्कच्चिय होइ जीवदया ॥ २ ॥

सुनन्देनाभिग्रहो गृहीतः—'भगवन्! अतः परं जीववधो न कार्यो मया। मांसं न भक्षितव्यम्।' अन्यदा बहुषु दिनेषु व्यतिक्रान्तेषु दुर्भिक्षः सञ्जातः। तस्मिन् दुर्भिक्षे सर्वोऽपि जनोऽन्नस्याप्राप्तौ मत्स्यमांसाहारं करोति। सुनन्दोऽपि भार्यया भणितः—'त्वमपि लोकाचारं प्रतिपालय।' तेन कथितम्—'पापहेतुना कर्मणाऽलम्।' भार्या प्राह—'रे मूर्ख! त्वं केन भ्रामितः, यत्कुलाचारं न पालयसि।' इतश्च तस्य सालका मिलिताः। तैर्बलान्नदीमहाह्रदे नीतः। तत्र जालं क्षेपितः। जाले पतितान् बहून् मत्स्यान् दृष्ट्वा सुनन्दस्य हृदये कृपा समुत्पन्ना। सर्वान् मत्स्यान् विमुच्य सुनन्दो गृहमागतः। एवं त्रीणि दिनानि तैः सालकैस्तस्य सुनन्दस्य पार्श्वात् तत्पापकर्म कारितम्। तेन देहेन मनसाऽपि न विहितम्, परं संघट्टवशादेकस्य मत्स्यस्य पांखुडी भग्ना। तेन सालकानामग्रे कथितम्। 'भो! भोः! कुटुम्बस्य कृते प्राणवधं न करोमि। यतः—

जस्स कए कोडीउ जीवाणं वहेमि संपयं मूढो।
नरयंगयस्स सरणं मज्झ कुटुंबेन तं होइ ॥ ३ ॥
इक्कं पि पयं वच्चइ जं परलोयंमि सह न जीवेण।
तस्स सरीरस्स कए कहं पिका हंति जीववहं' ॥ ४ ॥

---

१. ०परयो for ०परगो० A.

इत्युक्त्वा तेनानशनं गृहीतम्, मृतः। अत्रैव भरते राजगृहे नगरे नरवर्मा नाम राजा। तत्र मणिकारो नाम श्रेष्ठी द्वादशसुवर्णकोटीनामधिपतिः। तस्य सुजसा नाम्नी भार्या। तस्या कुक्षौ सुनन्दजीवः समुत्पन्नः। सम्पूर्णे काले पुत्रजन्माभवत्। तस्य दामन्नक इति नाम कल्पितम्। क्रमेणाष्टवार्षिको जातः। अन्यदा भवितव्यतावशेन तस्य श्रेष्ठिनो गृहे मारिरोगः सञ्जातः।

ददाति दयया चान्नं पयः पाययते तु यः।
तस्याञ्चलदलैर्लग्नो मारिः प्रसरितः क्षितौ ॥ ५ ॥

राज्ञा भणितम्—'अयं मारिरोगः सर्वत्र पुरे सञ्चरिष्यति।' अतोऽस्य गृहद्वारे वाटी कारिता। कियता कालेनैव मारिरोगेण सर्वे मातृपितृप्रमुखा मनुष्या मृताः। पूर्वभवकृतानुकम्पावशेन परं दामन्नक उद्धरितः। परं गृहान्निस्सारं न लभते। क्रमेण मृतकभक्षकश्वानप्रवेशमार्गेण निर्गतः। भिक्षानिमित्तं भ्रमन् सागरपोतस्य व्यवहारिणो गृहे गतः। यावद् गृहद्वारि तिष्ठति तावन्मुनियुगलं विहरणाय समागतम्। दामन्नकं दृष्ट्वा ज्येष्ठतपोधनेनोक्तम्—'भोः!

आइन[1] ह मह वयणु तणु[2] लक्खणिहिं मुणामि।
एउ बालुय एह घराहकवणि भविस्सइ सामी' ॥ ६ ॥

कुड्यन्तरितेन सागरपोतव्यवहारिणा इदं वचः शुश्रुवे। स्वमनसि चिन्तितम्—'मुनयः प्रलयेऽपि अलीकं न वदन्ति। यतः—

वज्जिय रागद्दोसा सममणितणमित्तसत्तुणो मुणिणो।
इयरनरु व्व न जपंति नूणमवियारियं अत्थं ॥ ७ ॥

तावत्किं मम कुलक्षयो भविष्यति? समुद्रदत्तो मे पुत्रः किं विनाशं यास्यति यत इयति प्रौढे मम कुटुम्बे प्रवर्त्तमानेऽयं रङ्को मम गृहस्वामी भविष्यति? अन्यच्च यन्मुनिनोक्तं तदन्यथा न जायते।' श्रेष्ठी दुःखी बभूव। 'धिग् संसारनाटकं यो विभवो मम पितृपितामहप्रमुखैरतिचिरं पालितः, हा तस्य विभवस्यायं रङ्कः स्वामी भविष्यति। तावत् कमप्युपायं करिष्यामि। किं कृतेन दुःखेन, तावदस्य मारणोपायं चिन्तयामि। अयं रोग इवोपेक्षितो मरणाय जायते'

१. आयजह for आइन ह A. २. •सुत्थु• for तणु A.

इति स्वचित्तेन सह मन्त्रयित्वा मोदकं गृहीत्वा तस्य दामन्नकस्याग्रे उक्तम्—'वत्स आगच्छ यथा ते मोदकं ददामि' इति श्रुत्वा दामन्नकोऽपि तेन सह जगाम। गतो व्यवहारी चण्डालपाटके। तत्र खंगिलो नाम चण्डालाग्रणीः। तमाकार्य एकान्ते तस्मै द्रव्यं प्रदाय तस्याग्रे इत्युक्तम्—'भो मदीयमेतत् प्रयोजनं कुरु। यथा बालः प्रच्छन्नं हन्तव्यः। मारितस्याभिज्ञानं मम दर्शितव्यम्।' चण्डालेनापि प्रतिपन्नम्। नगराद् दूरं नीतो दामन्नकः। चण्डालेन चित्ते चिन्तितम्—'अनेन वराकेन कोऽपराधो विहितः यत् सागरपोत एनं मारयति। तदहं सर्वथा एनं न मारयिष्यामि। मम हस्तौ न वहतः।' ततो यमजिह्वासमानां कर्त्तिकां समाकृष्य तस्य कनिष्ठाङ्गुली छिन्ना। तस्य बालकस्योक्तम्—'यद्यस्मिन् नगरे स्थास्यसि ततो मारयिष्यामि त्वाम्, यदि नगरं मुक्त्वाऽन्यत्र यासि ततो मुञ्चामि त्वाम्।' तेन रुदता प्रत्युक्तम् 'एवं करिष्ये।' ततो मुक्तश्चण्डालेन। चण्डालो गृहे गतः। अङ्गुलीखण्डं दर्शितं सागरपोतस्य। सोऽपि हृष्टो बभूव।

दामन्नकोऽपि वने भ्रमन् सागरपोतस्य गोकुलिकेन दृष्टः। पृष्टश्च—'कस्त्वम्?' दामन्नकेनोक्तम्—'उच्छिन्नवंशो वणिक्पुत्रोहम्।' ततः स्वगृहे नीतः निजभार्यायाः समर्पितः। तव अपुत्राया अयं पुत्रो गोत्रदेव्या दत्तः। गोकुलिकगृहिणी परितुष्टा जाता। विनयप्रमुखैर्गुणैः तयोरतीव वल्लभो बभूव। अथ दामन्नकस्तत्र गोकुले वर्धमानो यौवनं समाससाद। अन्यदा गोकुलविलोकनार्थं सागरपोतो व्यवहारी आजगाम। तत्र दामन्नकं दृष्ट्वा व्यवहारिणा पृष्टम्—'कोऽयं बालः?' तेनोक्तम्—'एकाकी अत्र वने भ्रमन् निर्नाथो मया पुत्रत्वेन प्रतिपन्नः।' व्यवहारिणा कर्तितकनिष्ठाङ्गुलीदर्शनाद् 'दामन्नक एवायम्' इति निश्चितम्। ततश्चिन्तितञ्च सागरपोतेन—'मम बाह्यधनस्यायं स्वामी बभूव। मुनिवचनं किमन्यथा भवति? तथापि पुरुषकारो न मोक्तव्यः।' एवं विचिन्त्य सागरपोतेनोक्तम्—'भो गोकुलिक! वयं गमिष्यामो गृहम्।' तेनोक्तम्—'बहोः कालादद्य यूयमागताः। अद्यापि गोकुलं न विलोकितम्।' सागरपोतेनोक्तम्—'गृहे महत्कार्यमस्ति, अतोऽधुनैव यास्यामः।' गोकुलिकेनोक्तम्—'यद्यत्युत्सुकं कार्यमस्ति ततो लेखं गृहीत्वाऽयं मम पुत्रस्तत्र यास्यति।'

सागरपोतेन लेखं लिखित्वा तस्य करेऽर्पयित्वा प्रेषितः। गतो दामन्नकः। यावद् राजगृहनगरोद्याने गतस्तावत् परिश्रान्तो विश्रामहेतोः कन्दर्पदेवगृहे सुप्तः, निद्रा समागता। इतश्च तस्यैव व्यवहारिणो विषानाम्नी पुत्री मदनपूजानिमित्तं तत्रैव प्राप्ता। तया दृष्टो दामन्नको विशाललोचनो विशालवक्षःस्थलः। तस्यास्तं विलोकयन्त्याः पितृलेखे दृष्टिर्गता। यष्टिप्रान्तात्तं गृहीत्वा वाचयति—'स्वस्ति श्रीगोकुलात्सागरपोतः समुद्रदत्तं सस्नेहमालिङ्गय वार्तयति कार्यञ्च।

अधौतपादकस्यैव पुरुषस्यास्य सत्वरम्।
विषं दत्त्वा त्वया कार्यं निश्शल्यं हृदयं मम'॥ ८॥

ततस्तया चिन्तितम्—'नूनं पित्रा मम योग्य एष वरो लब्धः।' यद्यैव विवाहः कार्यस्तदद्यतनीयं सुन्दरं दिनं दृष्टम्, अतोऽद्यैव विवाहः। यद् विषं दातव्यं तदुत्सुकतावशादाकारस्थानेऽनुस्वारो विहितः, तदहं शुद्धं करिष्यामि' इति विचिन्त्य नयनाञ्जनं गृहीत्वा विन्दुस्थाने आकारः कृतः। पुनरपि मुद्रयित्वा लेखस्तथैव मुक्तः। सा गृहं गता। स्तोकवेलानन्तरं दामन्नकोऽपि गृहमाजगाम। समुद्रदत्तस्य लेखः समर्पितः। समुद्रदत्तेनापि वाचयित्वा लेखोऽवधारितः। 'तातादेशो मम प्रमाणम्' इति भणित्वा विवाहस्य सामग्री कृता। समग्रोऽपि स्वजनवर्गो मिलितः। तस्मिन्नेव दिने शुभे लग्ने समागते दामन्नको विवाहं कारितः। प्रारब्धं वर्द्धापनकम्।

आभरणकिरणदिप्पंतदेह अहरीकयसुहवरूवरेह।
घणकुंकुमकद्दमघरदुवारि खुप्पंति चलण नच्चंति नारि॥ ९॥

अत्रान्तरे सागरपोतो नगरं प्राप्तः। मार्गमिलितेन लोकेन कथितम्—'धन्यस्त्वं येनेदृग् जामाता प्राप्ता।' सागरेण चिन्तितम्—'नूनं तेन दुरात्मना मम पुत्री परिणीता। गृहागतेन दृष्टा स्वपुत्री, विवाहकङ्कणालङ्कृतशरीरो दृष्टो दामन्नकः। 'हा! अन्यथाऽहं कार्यं चिन्तयामि, दैववशेनान्यथा परिणमति। साम्प्रतं मम गृहमनुष्याणामयं स्वामी बभूव। यतः गृहस्थानां गृहेषु स्त्रियः प्रमाणम्, स्त्रीणां जामाता प्रमाणम्। भणितञ्च—

तीयह तिन्नि पियारडा कलिकज्जलसिंदूर ।
अन्नइ तिन्नि पियारडा दुद्धजमाईतूर ॥ १० ॥

एतदनुचितं द्रष्टुं न शक्नोमि । मम पुत्र्या वैधव्यं वरं सहिष्ये पुनरेनं सर्वथा मारयिष्यामि' इति विचिन्त्य गतो मातङ्गपाटके । खङ्गिलो भणितः । 'रे खङ्गिल ! त्वया मम वचः प्रमाणीकृतं न ।' तेनोक्तम्—'तदा बालकं दृष्ट्वा कृपा उत्पन्ना, अधुना दर्शय यथा तं व्यापादयामि ।' सागरपोतेन भणितम्—'यद्येवं ततोऽद्य नगरदेवतापूजनार्थं तं दामन्नकं प्रेषयिष्यामि तदा त्वया मारयितव्यः । ततो गृहमागतः । गृहमागतेनोक्तम्—'वधूवराभ्यां कुलोचित आचारः प्रतिपालितः किं वा न ?' तैरुक्तम्—'प्रतिपालितः ।' ततो नगरदेवीपूजनाय सामग्री कृता । ततश्चलितौ वरवध्वौ देवीपूजार्थम् । मार्गे व्रजन्तौ दृष्टौ । हट्टनिविष्टेन समुद्रदत्तेन पृष्टौ च—'ईदृशे सन्ध्यासमये सूर्येऽस्तमिते तिमिरप्रसरेपरिस्फुरिते युवां कुत्र चलितौ ?' दामन्नकेनोक्तम्—'नगरदेवीपूजनाय ।' समुद्रदत्तेनोक्तम्—'तर्हि युवां तिष्ठतः, अहमेव गत्वा देवीपूजां करिष्यामि ।' पूजोपकरणं गृहीत्वा गतः समुद्रदत्तो देवीगृहं प्रविशन् पूर्वप्रविष्टेन हतः खङ्गिलेन । सागरदत्त इति श्रुत्वा यावत् समुद्रदत्तनिरीक्षणाय हट्ट आयाति तावद्दृष्टो दामन्नको वधूसहितः । सागरपोतः पुत्रविनाशं श्रुत्वा हृदयविस्फोटेन मृतः । ज्ञातवृत्तान्तेन राज्ञा दामन्नकस्तस्य गृहे स्वामी कृतः । अन्यदा मङ्गलपाठकैरिति पठितम्—

'अणु पंखमावहं ता विआवया तस्स ऊस वाहुंति[1] ।
सुहुं[2]दुखु[3]कत्थ फुडउ जस्स कयंतो वहे[4] पखुं[4] ॥ ११ ॥

एतच्छ्रुत्वा तेषां त्रिसहस्रद्रव्याणां दानं दत्तं दामन्नकेण । राज्ञाऽनुचितदानं श्रुत्वा दामन्नक आकारितः । पृष्टं दानकारणम् । तेन निजपूर्ववृत्तान्तो राज्ञोऽग्रे निवेदितः । राज्ञा परितुष्टेन तस्य श्रेष्ठिपदं दत्तम् । विपुलान् भुनक्ति, दानं ददाति, प्रासादान् उद्धरति । अन्यदा तस्य इति चिन्ता बभूव यत् 'पूर्वभवे मम किं कर्म विहितं यद् व्यसनस्थाने ममोत्सवः' इति विचिन्तयतस्तस्य प्रभातं जातम् ।

१. वाहुंत Z. २. सुह० for सुहु० Z. ३. दुख for ०दुखु० Z. ४. वहइ पखं for वहे पखुं Z.

प्रभाते धर्मनियुक्तेन पुरुषेण दामन्नकस्याग्र उक्तम्—'उद्याने विमलबोध आचार्यः समागतः।' दामन्नको हृष्टो बभूव। गतो वन्दनार्थम्। वन्दित्वा पूर्वभवः पृष्टः। मुनिनापि पूर्वोक्तस्तस्य पूर्वभवः कथितः 'यत् त्वया पूर्वभवे मत्स्यानां त्रिवेलं कष्टम् उपादत्तं ततोऽस्मिन् भवे तवापि त्रिवारं कष्टमागतम्। यदेकस्य मत्स्यस्य पाखुण्डी भग्ना ततस्तव कनिष्ठाङ्गुली छिन्ना। जीवदयाप्रभावात्तवेदृशी सम्पत्' इति श्रुत्वा जातिस्मरो जातः। दीक्षां गृहीत्वा स्वर्गं जगाम॥

इति जीवदयाविषये दामन्नककथानकम्।

## कूलवालककथा

तविउ वि तवो तिव्वो चिरकालं सेविउ विवणवासे।
इह कूलवालयस्स व विहलो गुरुभत्तिरहियस्स॥ १॥

अत्रैव भरतक्षेत्रे राजगृहं नाम नगरम्। तत्र श्रेणिको नाम राजा राज्यं करोति। तस्य सप्त धातवो जिनवदनं विनिर्गतैः[1] सप्तधातुभिर्वासिता वर्तन्ते। तस्य नन्दाकुक्षिसमुद्भूतोऽभयकुमारो नाम पुत्रः, चिल्लणाकुक्षिसमुद्भूतः अशोकचन्द्रो नाम कुमारः। अन्येऽपि हल्लविहल्लकुमारप्रमुखाश्चिल्लणापुत्राः, अन्यासां देवीनां कालकुमारप्रभृतयो बहवः कुमाराः। जनः परः। श्रेणिको राज्यं परिपालयति। अन्यदा तत्र श्रीमहावीरः समवासरत्। राजा वन्दनाय गतः। वन्दित्वा उपविष्टः। देशनान्ते अभयकुमारेण स्वामी पृष्टः। 'भगवन्! अतः परमपश्चिमो राजर्षिः को भविष्यति?' भगवताऽऽदिष्टम्—'अस्माकं तीर्थेऽन्तिमो राजर्षिः श्रीउदायीनृपो जातः। तेनातः परं बद्धमुकुटा नरेन्द्रा व्रतं न ग्रहीष्यन्ति।' ततो व्रतविघ्नभयेन अभयकुमारेण राज्यं न गृहीतम्। श्रेणिकेनोक्तम्—'मामनापृच्छ्य त्वया दीक्षा न ग्रहीतव्या। अहं यदि न मुञ्चामि त्वां तावन्न गन्तव्यम्।' अभयकुमारेणापि तथैव प्रतिपन्नम्। अन्यदा शीतकालसमये महाशीतभरे पतति चिल्लणादेवीसहितो राजा श्रीवीरवन्दनाय जगाम। वन्दित्वा यावद् व्यावृत्तस्तावत् चिल्लणादेव्या शीतपरीषहं सहमानः कायोत्सर्गेण स्थित एको महा

1. The portion beginning with सप्त and ending with विनिर्गतैः is missing in Z.

मुनिर्दृष्टः। राज्ञी चिन्तयति—'अयं महामुनिः अस्मिन् शीतभरे निरावरणो रजनीं कथं गमयिष्यति' इति चिन्तया रात्रौ पल्यङ्के देवी सुप्ता। अथ कथमपि तस्या करो निर्गत आवरणबाह्ये। तस्मिन् करे शीतेन पीडिते चिल्लणादेवी जागृता इति भणति—'स कथं रजनीं गमयिष्यति? राज्ञा एतद्वचः श्रुतम्—'नूनं केनापि सह कृतसङ्केता देवी यद्वारं वारमेवं कथयति।' राजा कोपे चटितः। प्रभातकालेऽभयकुमारस्याग्रे उक्तम्—'अन्तःपुरं सकलमपि प्रज्वालय' इति शिक्षां दत्त्वा स्वयं जिनसमीपं गतः। नत्वा स्वामिनं पृच्छति—'भगवन्! चिल्लणादेवी किमेकपत्नी किं वा बहुपत्नी?' स्वामिनाऽऽदिष्टम्—एकपत्नी सुशीला चिल्लणादेवी। यत् पुनः 'स कथं रजनीं गमयिष्यति' देव्या इत्युक्तं ततः शीतपरीषहं सहमानो मुनिर्दृष्टः। सन्ध्याकाले रात्रौ महाशीते देव्याः कर आवरणबाह्ये गतः। तेन मुनिः स्मृतः, 'स कथं भविष्यति?' सन्देहो भग्नः। पश्चात्तापरो राजा धवलगृहं प्रति चलितः। तावदभयकुमारोऽपि शून्यहस्तिशालां प्रज्वाल्य जिनवन्दनार्थं चलितः। मार्गे राजा मिलितः। राज्ञा पृष्टम्—'अभयकुमार! प्रज्वालितमन्तःपुरम्।' तेनोक्तम्—'एवमेव'। राज्ञोक्तम्—'त्वं किं न प्रविष्टो मध्ये[1]।' अभयकुमारेणोक्तम्—'यद्येवं तातादेशस्ततो द्रव्याग्निप्रवेशेनालम्, संयमं भावाग्निं प्रविशामि।' ततो नन्दामात्रा समम् अभयकुमारेण महाविभूत्या दीक्षा गृहीता। ततः कियति गते काले कोणिकस्य राज्यं दास्यामीति चिन्तयित्वा हल्लविहल्लकुमारयोः सेचनको हस्तिराज्ञा दत्तः। चिल्लणादेव्या देवदत्तो हारो दत्तः। पट्टकूलयुगलं कुण्डलयुगलं च चिल्लणायाः प्रदत्तम्। अन्यदा कोणिकेन कालकुमारप्रभृतिभिर्दशभिः कुमारैस्सह मन्त्रयित्वा श्रेणिको राजा गुप्तौ क्षिप्तः। पूर्वाह्णेऽपराह्णे कशानां शतेन हन्ति, भक्तपानं च वारितम्। ततश्चिल्लणादेवी केशेषु कुल्माषान् महता कष्टेन भोजनार्थं प्रवेशयति। उपाये केशेषु चन्द्रहासा मदिरां नयति। शतवारं प्रक्षालितेषु केशेषु सर्वं पानीयं सुरा भवति। राजा सुराप्रभावात् कशाघातान् सहते। अन्यदा तस्य कोणिकस्य पद्मावतीकुक्षीसम्भव उदायननामा पुत्र उत्पन्नः। अन्यदोत्सङ्गे तं संस्थाप्य कोणिको भोजनं कुरुते। तस्य मूत्रं

1. Z. reads मया मुक्तः for त्वं किं न प्रविष्टो मध्ये।

स्थालमध्ये पतति । कोणिकस्तं पराक उत्सङ्गान्न करोति, समाधि-संभङ्गभयान्मूत्रमिश्रितं भक्तं जक्षति । पार्श्वस्थितां मातरं वदति—'मातः! अन्यस्यापि कस्य पुत्र एवं प्रियोऽस्ति ?' मात्रोक्तम्—'रे दुराचार! शृणु त्वयि गर्भगते मम तव पितुर्मांसभक्षणे दोहदो जातः। राज्ञा पूरितो दोहदः। मया त्वयि जाते दुष्ट इति भणित्वा त्वं परित्याजितोऽशोकवाटिकायाम्। राज्ञैतच्छ्रुत्वा स्वयं गत्वा त्वमानीतः। अशोकचन्द्र इति तव नाम कृतम्। तत्र कुक्कुटेन तवाङ्गुली विदारिता। सा कोणिका जाता। तेन कोणिक इति तव नाम कृतम्। तयाऽङ्गुल्या पच्यमानया तवातीवारतिर्जाता। तव पिता पूतगलन्तीं तामङ्गुलिं स्वमुखे धारयति। ततस्त्वं न रोदिषि। इत्थं त्वं वल्लभः।' कोणिक इति श्रुत्वा सपश्चात्तापो बभूव—'धिग् मे स्वपितरं प्रत्यपकारः।' ततस्तत्कालमेव लोहदण्डं गृहीत्वा निगडभञ्जनार्थं स्वयमेव चलितः। तावद् रक्षापुरुषै राज्ञोऽग्रे विज्ञप्तम्—'लोहदण्डं गृहीत्वाऽत्युत्सुकः कोणिकः समायाति, न ज्ञायते केनापि कार्येण।' राजा चिन्तयति—'केनापि विडम्बनामरणेन मां मारयिष्यति' इति विचार्य तालपुटं विषं भक्षितम्। यावत् कोणिकस्तत्रायाति तावन्मृतो राजा श्रेणिकः। प्रथमनरके चतुरशीतिवर्षसहस्रायुर्नारकी बभूव। नरकादुद्धृतोऽत्रैव भरते महापद्मनामा प्रथमतीर्थङ्करो भविष्यति। इतश्च कोणिकोऽपि पितुर्वियोगेन दुःखी बभूव। इमां गाथां पठति—

आरामगिहपएसा हसियव्वि जिमिय जं पि उद्देसा।
दीसंति ते पएसा तिव्वियपुरसा न दीसंति ॥ २ ॥

प्रधानैः प्रतिबोधितोऽपि न करोति स्नानभोजनक्रियाम्। ततश्च कोणिकेन पितुर्दुःखमसहमानेन राजगृहं परित्यज्य नव्या चम्पापुरी निवेशिता। तत्र कोणिकोऽभिराज्यं करोति। इतश्च हल्लविहल्लकुमारौ सेचनकगजारूढौ दुकूलकुण्डलवरहारविराजितौ चम्पापुरीमध्ये प्रतिदिनं परिभ्रमतः। अन्यदा तयोराश्चर्यं दृष्ट्वा कोणिकभार्या पद्मावती राजानं प्रति प्राह—'देव! राज्यं तव क्लेशमात्रम्, परन्तु राज्यसौख्यं हल्लविहल्लकुमारयोः। द्वौ पुरीमध्ये सेचनकगजारूढौ क्रीडां कुरुतः। तावत्प्रार्थयस्व सेचनकप्रमुखानि रत्नानि।' राजा

भणति—'पित्रा दत्तानि रत्नानि प्रार्थयन् लज्जेऽहम्।' राज्ञी भणति—'एतेषां रत्नानां स्थानेऽन्यानि समर्पय।' ततो राजा कुमारयोः पार्श्वात् सेचनकप्रमुखानि रत्नानि प्रार्थयति। ताभ्यामुक्तम्—'त्वं राजा सर्वस्वस्यापि स्वामी, गृहाण रत्नानि' इत्युक्त्वा गृहं गतौ कुमारौ। ताभ्यामालोचितम्—'अयं शक्त्याऽपि ग्रहीष्यति' इत्यालोच्य रात्रौ सेचनकगजारूढौ निर्गतौ विशाल्यां चेटकराज्ञः समीपे। ज्ञातवृत्तान्तेन कोणिकराज्ञा चेटकराज्ञः समीपे दूतः प्रेषितः। दूतो वदति—'हल्लविहल्लौ शीघ्रं प्रेषय।' चेटकराज्ञोक्तम्—'मम चित्ते एतयोस्तवाप्यन्तरं न। सदृशौ हल्लविहल्लौ। द्वावपि मम पुत्र्याः पुत्रौ। एतौ शरणागतौ कथं समर्पयामि। अन्योऽपि शरणागतो नार्प्यते, विशेषतो दौहित्रौ' इति श्रुत्वा कोपं गतो राजा कोणिकः। पुनरपि दूतः प्रेषितः—'अर्पय कुमारौ। यदि नार्पयसि ततो युद्धविषये सज्जो भव।' चेटकः प्राह—

श्रियो नाशं यान्तु व्रजतु निधनं गोत्रमखिलं
शिरश्छेदो वाऽस्तु प्रभवतु समन्ताद्विपदपि।
विवेकार्कज्योतिर्विघटितमहामोहतमसः
प्रतिज्ञातादर्थात्तदपि न चलन्त्येव कृतिनः॥ ३॥

इति विमृश्य चेटकेन युद्धं प्रतिपन्नम्। कोणिकोऽपि समग्रयुद्धसामग्रीं विधाय वैशाल्यां समागतः। प्रारब्धं युद्धम्। परं चेटकस्यायमभिग्रहः—'यदेकस्मिन् दिने एक एव बाण आत्मसमानस्य सुभटस्य प्रक्षेप्यः।' देवताबलात् सोऽपि बाणो निष्फलो न भवति। तद्दशभिर्दिनैः कोणिकस्य लघुभ्रातरो दशकालकुमारप्रभृतयो हताः।' ततो भयार्तचित्तेन कोणकेन चिन्तितम्—'नूनमेकादशमे दिने मम विनाशो भविष्यति। तावद् युद्धं कर्तुं न युज्यते।' राजाऽपक्रम्याष्टमतपः करोति। ततः पूर्वसङ्केतात् सौधर्मेन्द्रचमरेन्द्रौ समीप आगतौ। कोणिकं प्रति भणतः—'राजन्! तव किं प्रियं कुर्वहे?' राज्ञा भणितं चेटकविनाशाय। ताभ्यामुक्तम्—'परमसम्यग् दृष्टं चेटकं कथं मारयावः। परं तव युद्धं कुर्वाणस्य प्राणरक्षणं करिष्यावः।' राज्ञा भणितम्—'एवं भवतु।' ततः कोणिको राजा चेटकेन युद्धं करोति। ततश्चमरेन्द्रसाहाय्याद् रथमुसलशिलाकण्टकसङ्ग्रामैः प्रतिपक्षपक्षं

विज्ञप्तम्‌ कोणिकश्चेटकसमीपमागतः। ततश्चेटकराज्ञा कोणिकं प्रति बाणो मुक्तः। सोऽपि शिलायामास्फलज्य इन्द्रप्रभावान्मार्गे स्खलितः। चिन्तितं राज्ञा चेटकेन—'किं मे पुण्यप्रसरः क्षीणो यदयममोघो बाणः स्खलितः? ततोऽतः परं युद्धं कर्तुं न युज्यते।' प्रविष्टः पुरीमध्ये राजा। कोणिकोऽपि नगरीं निरुध्य स्थितः। तुंगप्राकारा सा नगरी केनापि नातिक्राम्यते। हल्लविहल्लकुमारौ सेचनकगजारूढौ रात्रौ कटकमध्ये प्रविश्य सैन्यं प्रतिदिनं हतः। ततः कोणिकेन मन्त्रिणा पृष्टः—'कोऽप्यस्त्युपायो येनेमौ हन्येते।' मन्त्रिणो भणन्ति—'यदि सेचनकगजो हन्यते तदेतावहतावपि हतौ। ततः सेचनकमारणोपायः क्रियते।' ततो मार्गे खदिराङ्गारपूर्णा खातिका कारिता, उपरि तृणसमूहेनाच्छादिता। ततो रात्रौ हल्लविहल्लकुमारौ गजाधिरूढौ समागतौ। हस्ती खातिकोपकण्ठे समागतः। परमग्रे ताड्यमानोऽपि न चलति, तावत्‌ कुमारौ प्रकुपितौ गजं प्रति कथयतः—'रे दुष्ट गज! तावदस्माभिस्त्वं वर्धितः। तव कृते चेटकोऽप्येदृशीमवस्थां प्रापितः। अद्य व्यसनवेलायां त्वं न चलसि।' गज इति श्रुत्वा स्कन्धात्कुमारावुत्तार्याङ्गारखातिकायां पतित्वा मृतः। नरके गतः। कुमारौ गजमरणाद्‌ दुःखिनौ वैराग्यपरौ शासनदेव्या श्रीमहावीरपार्श्वे नीतौ। तत्र स्वामिहस्तेन द्वाभ्यां दीक्षा गृहीता। अथान्यदा चिन्ताप्रपन्नस्य कोणिकस्याकाशवाणी जाता—

समणे जइ कूलवालए मा गहियं गणियं[1] गमिस्सए[2]।
राया असोयचंदए वेसालिं नगरीं गहिस्सए॥ ४॥

तत्‌ श्रुत्वा राज्ञा भणितम्‌—'कोऽसौ कूलबालको मुनिः? केनापि ज्ञातवृत्तान्तेन मन्त्रिणा कूलवालकचारित्रमुक्तम्‌-"देव! अस्मिन्नेव भरते सङ्गमसूरयो नामाचार्या बहुशिष्यपरिकराः। तेषामेकः शिष्यो दुर्विनीतः स्त्रीणां रूपलावण्यादिवर्णनं करोति। यथाऽऽगम उक्तम्‌—

थेवो वि जह दव्वग्गी दहइ समग्गं पिनत्ति कंतारं।
तिव्वं पि तव वहनि ठुवेइ तरुणीश्र नामं पि॥ ५॥

1. गणियं is missing in A. 2. लमिस्सए for गमिस्सए Z.

एवं प्रतिबोधितोऽपि स न बुध्यति गुरुविषये, विशेषतो वैरं वहति। अन्यस्मिन् दिने गुरवस्तेन कुशिष्येण सह गिरनारिशिखरे चटिताः। श्रीनेमीश्वरं प्रणिपत्य यावदुत्तरन्ति तावत्तेन कुशिष्येण निजचेतसि इति विमृष्टम्—'गुरूणां विनाशेऽयमेवावसरः, तावद् हनिष्यामि स्वगुरुम्, अन्यथा दुर्वचनैर्मां ताडयिष्यन्ति।' ततो गुरुपृष्ठतो महती शिला मुक्ता। गुरुभिरागच्छन्ती रडरडायमाना दृष्टा। मार्गं परित्यज्य दूरं गताः। गुरुभिः शिष्यो भणितः—'रे रे दुरात्मन्! गुरुतल्पक! गुरुप्रत्यानीक! किं कृतं भवता? एके एकवारं कृतमुपकारं न विस्मरन्ति। अस्माभिश्चिरमुपकृतं तव विद्यादानादिना।' गुरुभिरुक्तम्—'यदर्थं त्वं ममोपरि वैरं वहसि ततस्तव स्त्रीसकाशात्तपःक्षयो भविष्यति।' एवमुक्त्वाऽऽचार्यैः स्वगच्छे गतः। कुशिष्योऽपि—'गुरोर्वचोऽलीकं करिष्यामि' इति विमृश्यारण्ये गतः। गिरिनदीकूले तपः करोति। इतश्च वर्षाकाले समागते नदी जलपूरेण वोढुं प्रवृत्ता। तावज्जलदेवतया तस्य महर्षेरुग्रतपसा रञ्जितया इति चिन्तितम्—'नदीजलप्रवाहेणायं महात्मा न प्रवहेत्', ततोऽन्यकूलेन नदी वहति। ततश्च तद्देशवासिना लोकेन इति कथितम्। तस्य कूलबालक इति नाम कल्पितम्। मासदिनान्ते पक्षदिनान्ते यः कोऽपि सार्थस्तत्र समायाति तत्र गत्वा पारणं करोति। ततश्च कोणिकेन राज्ञा इति श्रुत्वा मागधिका नाम पण्याङ्गना इत्युक्ता—'भद्रे! इहानय तं कूलबालकश्रमणम्।' तया इत्युक्तम्—'एवं करिष्यामि।' कपटश्राविका जाता, सार्थेन सह तत्र गता। तं कूलबालकश्रमणं वन्दित्वा सविनयम् एवं वदति—'भगवन्! त्वामत्र स्थितं श्रुत्वा वन्दनार्थमिहागता' इति। स्तवनं विधत्ते—

'ता अज्ज दिणं सह लज्जं दिट्ठो जंगमं तुमं तित्थं।
संपइ कुणसुपसायं महमुणिवरगिह्लिउं भिक्खं॥ ६॥

मम भिक्षां गृहाण। यतः—

लज्झंति पुन्नवसउ जम्हा तुम्हारि साइ पत्तायं।
किं होइ कयाइ बुट्ठी घरंगणे पुन्नरहियस्सा'॥ ७॥

इति तस्या विनयेन रञ्जितः कूलबालको भिक्षार्थं तस्याः स्थाने गतः। तया मोदका दत्ताः। मोदकभुक्त्यनन्तरं तस्य अतीसार

उत्पन्नः । अतीसारेण पीडित उत्थातुमपि न शक्नोति । ततो मागधिका मुनिं भणति—'हा हा मया त्वं कष्टे पातितः । साम्प्रतं तव प्रतीकारं कर्तुं वाञ्छामि, तदनुजानीत मां प्रांशुकैर्द्रव्यैरुपकारं कर्तुम् । भवतां कोऽप्यतीचारः समेति पश्चात्समालोचयथाः । यतः—

सव्वत्थसंजमसंजमाउ अप्पाणमेव रक्खंतो ।
मुचइ अइवायाउ पुणो वि सो हीनया विरई ॥' ८ ॥

इति सिद्धान्तोक्तयुक्तविधिभिस्तया प्रतिबोधितः । तेन महात्मना तस्याः पार्श्वाद् वैयावृत्त्यमनुमतम् । ततो मागधिका तस्य वैयावृत्त्यं करोति । कतिचिद्दिनान्यौषधादिना तस्य प्रतीकारो विहितः । स्पष्टदेहो बभूव मुनिः । इतश्च सा मागधिका प्रकटितसर्वाङ्गावयवा सर्वाभरणविभूषितदेहा सविलासकृतहास्या अन्यदा मुनिमेवं भणति—'दुष्कारणमनेन तपसा किम् ? सुभग ! सुखैकनिधानं मामेव सेवस्व । परिहर व्रतमुद्राम्, अरण्यं मुञ्च, नगरं समाश्रय ।' कूलबालकमुनिरेवंविधानि तस्या वाक्यानि श्रुत्वा परित्यक्तधीरमागुणो व्रतं मुञ्चति । अथ तेन समं परितुष्टमना मागधिका कोणिकस्य पार्श्वे गता इति विज्ञपयति—'देव ! अयं मम जीवितेश्वरः कूलबालको नाम मुनिः । अनेन यत् किञ्चित् कार्यं भवति तत् क्रियताम् ।' राजा कूलबालकं प्रत्येवं वदति—'महात्मन् ! तं किमप्युपायं चिन्तय येन वैशालीपुरी भज्यते ।' महात्मा तदङ्गीकरोति । त्रिदण्डिनो वेषं विधाय पुरीमध्ये प्रविष्टः । श्रीमुनिसुव्रतस्वामिस्तूपो दृष्टः पुरीमध्ये, चिन्तितश्च—नूनमस्य स्तूपस्य प्रभावेन पुरी न भज्यते, तावत्तथा करिष्ये यथा लोकाः स्तूपमुन्मूलयन्ति ।' लोकास्तस्य समीप इति पृच्छन्ति—'भोः त्रिदण्डिन् ! कदाचिदपि पुरीरोधो निवर्त्तयिष्यति ?' मुनिः कथयति—'यदि स्तूपमुन्मूलयन्ति लोकास्तदा पुरीरोधो निवर्तते अन्यथा न । सैन्यमध्ये गत्वा कोणिकेन सहायं सङ्केतः कृतः—'यदा लोकास्स्तूपमपनयन्ति तदा त्वया सैन्येन सहापसर्तव्यम् ।' राज्ञा तत् प्रतिपन्नम् । पुनः प्रविष्टो मुनिः पुरीमध्ये । लोका भणन्ति—'त्रिदण्डिन् ! अस्मिन् विषये कः प्रत्ययः ?' तेनोक्तम्—'स्तूपे उन्मूल्यमाने कटकं यास्यति । अयं प्रत्ययः ।' लोकास्स्तूपमुन्मूलयन्ति । यथा यथा स्तूपमुत्पाटयन्ति तथा तथा सैन्यं प्रयाति । दृष्टप्रत्यया लोका विशेषत उन्मूलयन्ति

स्तूपम्। ततश्चोन्मूलिते स्तूपे कोणिकेन व्यावृत्य पुरी भग्ना। इतश्च चेटको राजा जिनप्रतिमां गृहीत्वा कूपे पतितः। पतन् धरणेन्द्रेण गृहीतः। निजनगरीं नीतः। तत्र मासं यावन्महोत्सवेनानशनं गृहीत्वा स्वर्गं जगाम इति कूलबालको मुनिर्गुरुभक्तिरहितस्तपः क्षयं प्राप्तः। अतो गुरुभक्तिपरैर्भाव्यम्।

इति गुरुविराधनायां कूलबालककथा।

## दानविषये कनकरथकथानकम्।

अत्रैव भरते वैताढ्यपर्वते कनकपुरं नाम नगरम्। तत्र कनकरथो नाम विद्याधरो राजा। तस्यैते गुणा निवसन्ति—त्यागी, सरलः, दाक्षिण्यसाररूपवान्। कामरूपविद्याप्रभावतः पूजितसर्वसमीहितार्थसार्थः। अन्यदा रात्रौ निजनगरस्य मध्ये नष्टचर्यायां परिभ्रमति कनकरथः। तावदेकस्मिन् देवकुले प्रेक्षणीकं भवति, तत्र गीतं गीयते। तावद् गायकेनैषा[1] गाथा पठिता—

हंसा सव्वत्थ सिया सिहिंडिणो सव्वचित्तियं गुरुहा।
सव्वत्थ जम्ममरणं सव्वत्थ वि भोइणो भोआ॥ १॥

इमां गाथां श्रुत्वा विद्याधरो निजमनसि चिन्तयामास—'त्रयाणां पदानामर्थः प्रत्यक्षो दृश्यते। अस्मिन् जीवलोके हंसाः सर्वत्र श्वेताः, मयूराः सर्वत्र[2] चित्रिताः, जन्ममृत्यू सर्वत्र, परमेतद् वचनमात्रं न पुनः प्रत्यक्षम्। भोगिनां सर्वत्र भोगा भवन्ति, एतदन्यथा। यथा राजा निजकीयदेशं त्यक्त्वाऽन्यत्र पूजां न लभते, यथा निजगृहे निजकान्ताऽऽलिङ्गनसौख्यं कोऽपि भुनक्ति तथाऽन्यत्र न। तावत् सर्वथाप्येतदलीकम्। अहं भोगवान् वर्ते यद्येवंविधा भोगाः। मम विदेश एतत् सत्यं वर' इति चिन्तयित्वा निजमन्त्रिणमाकार्य तेन सह मन्त्रयित्वा श्रीताम्रचूडनगरं गतो योजनशतप्रान्ते। नगरगतेन राज्ञा चिन्तितम्—'मनोज्ञवेषधारी रूपवान् पुरुषः सर्वत्र गौरवं लभते।' ततः कारणाद् विनष्टदेहो बभूव प्रक्षवन्नयनयुगलो विनष्टनासिकः प्रनष्टोष्ठपुटः। किं बहुना, अतीव कुरूपो विलोकयितुमशक्य एवंविधो जातः। इतश्च ताम्रचूडो राजा सप्तभूमिकप्रासाद उपविष्टो नगररम-

१. गायनेनैषा A. and Z. २. सर्वत्र is missing in Z.

णीयतां विलोकयति । तत्र राज्ञः समीपे सेवाकरणार्थं सामन्तमहासामन्तश्रीकरणव्ययकरणप्रमुखसभ्येषूपविष्टेषु निजराज्यभारेण गर्वितो राजा एवं वदति—'हे सभ्याः ! कस्य प्रसादेन यूयमीदृशीं राज्यसम्पदं विलसथ ।' तैश्छन्दानुवृत्त्या राज्ञोऽग्र उक्तम्—'राजन् ! तव प्रसादात् सर्वमेतद् विजृम्भते ।' अथ राजपुत्री मदनमञ्जरीनाम्नी सामन्तादीनां तेषामिति वचः श्रुत्वा ईषद् हसित्वा मौनेन स्थिता । राज्ञा हास्यकारणं पुत्री पृष्टा—'वत्से ! किमेतत् !' पुत्री प्राह—'तात ! अमीभिस्तव सेवकैरलीकमुक्तम्, अतो मया हसितम् ।' राजा प्राह—'वत्से ! किमलीकम्' तयोक्तम्—'अमी तव प्रसादादिति कथयन्ति तदसत्यम् ।' राज्ञा पुत्री पृष्टा—'वत्से ! तर्हि किं सत्यम् !' तयोक्तम्—'सर्वः कोऽपि स्वकर्मणा वर्तते जनः ।' राजा सभामध्ये पुत्र्या इति वचः श्रुत्वा कोपे चटितः । ततो मन्त्रिण आकार्य एवं वदति—'रे रे कश्चिद् दरिद्रं कुष्ठिनं व्याधिपीडितं महादीनं नरं पुत्रीयोग्यं वरमानयत, यथेयं मदनमञ्जरी तस्मै दीयते, यथा स्वकृतकर्मफलं प्राप्नोति' इति राज्ञो वचः श्रुत्वा सर्वेऽपि नगरमध्ये तादृशं नरं विलोकयन्ति । अत्रान्तरे तस्य माता लोकमुखादिति श्रुत्वा सभामध्ये समागता मदनमञ्जरीं प्रत्येवं वदति—'वत्से ! त्वया राज्ञोऽग्रे किमुक्तम् ?' पुत्री प्राह—'मयाऽलीकं नोक्तं यतः सर्वोऽपि निजकर्मफलं भुनक्ति ।' माता प्राह—'वत्से ! अद्यापि किञ्चिदपि न विनष्टम् । राज्ञो वचनं मानय ।' पुत्री प्राह—'प्रलयेऽप्यलीकं न वच्मि ।' अथ तै राजसेवकैर्नगरमध्ये परिभ्रमद्भिश्चतुष्पथमध्ये स एव कुष्ठरूपधारी पुमान् दृष्टः । तैः परस्परमित्युक्तम्—'यादृशो देवेनादिष्टोऽयं तादृश एव । एतस्मादपरः कोऽपि दुःखी न जायते, तत एनं गृहीत्वा यास्यामो राजसमीपे' इति विचार्योक्तं तैः—'भोः कुष्ठिन् !' उत्तिष्ठ । राजा त्वामाकारयति ।' ततस्तेन कुष्ठिनोक्तम्—'अहमग्रेऽपि दैवेन हसितः । भवतां नहि युक्तं मया सह हास्यं कर्तुम् । किं राजपुत्रीयोग्योऽपरः कोऽपि वरो नास्ति ।' राजपुरुषैरुक्तम्—'भोः उत्तिष्ठ वयं राजादेशकारिणः । परन्त्वेनमर्थमस्माकं स्वामी वेत्ति वयं न विद्मः ।' एवमुक्त्वा तैः सर्वैरुत्पाट्य नीतो राजसमीपे । ततो मन्त्रिभिः करान् वियोज्य राजा विज्ञप्तः—'स्वामिन् ! भवतामादेशेनायं नरः समानीतः ।' ततो राज्ञा निजपुत्री तस्मै कुष्ठिने प्रदत्ता । ततः कुष्ठी राजानं प्रति प्राह—'स्वामिन् ! अज्ञातकुलस्य

व्याधितस्य पुत्रीं दातुं तव न युज्यते। किं राजहंस्या सह पाणिग्रहणं काकस्य युज्यते' इत्याद्यनिच्छमानोऽपि कुष्ठी राज्ञा निजपुत्रीं परिणाय्य विसर्जितः। मदनमञ्जरी पित्रोश्चरणानभिवन्द्य हृष्टमुखकमला राजभुवनान्निस्सृता। यावन्निजभर्त्रा सह याति मदनमञ्जरी तावत् कुष्ठी राजमार्गे पतित्वा स्थितः। निजप्रियां प्रति कुष्ठी प्राह— 'देवि! अस्मात् स्थानात् पदमपि चलितुं न शक्नोमि।' ततो मदनमञ्जरी भणति - 'नाथ! कातरो मा भव। मम पृष्ठप्रदेशे चटस्व। यथासमीहितं स्थानं प्रापयामि।' तस्याः स्वभावं ज्ञात्वा कुष्ठी प्राह— 'अद्यात्रैव तिष्ठामः। कल्ये यद् युक्तं तत् करिष्यावः।' अस्मिन् प्रस्तावे महाजनवर्गो राजधवलगृहे गत्वा राजानं विज्ञपयति—'स्वामिन्! प्रसादं कुरु यथा तव जामातुरेकं तृणकुटीरकं कृत्वाऽर्पयामो वयम्।' राज्ञा प्रसादः कृतः। ततो महाजनेन तयोः कुटीरकं कृत्वाऽर्पितम्। तस्मिन् कुटीरके निजभार्यासहितः कुष्ठी स्थितः। अत्रान्तरे तेन कुष्ठिना निजहृदये चिन्तितम्—'एषा मम भार्या मयि रक्ता किं वाऽरक्ता तदहमस्या रागविरागौ विलोकयिष्यामि।' ततो वक्तुमारभत 'देवि! सावधानहृदया एकं मम वचनं शृणु। मम संसर्गात् स्तोककालेनैव त्वमपि कुष्ठिनी भविष्यसि, यत एते रोगाः संचारिणो भवन्ति—पामा, क्षयः, कुष्ठः, कामलः, नेत्ररोगः। एवं पञ्च रोगाः संसर्गाज्जायन्ते, कुष्ठप्रभावादलिकुलकज्जलश्यामलस्तव केशकलापः क्षयं यास्यति। मुखकमलं विच्छायं भविष्यति। विकसितकुवलयदलसदृशं नेत्रयुगं सङ्कोचमेष्यति। हे कृशोदरि! पक्वबिम्बीफलानुकारस्तवाधरो न प्राप्स्यते शोभाम्। किं बहुना, सर्वथा मम संसर्गात्तव शरीरं विनाशं यास्यति, विषवृक्षयोगाद् यथाऽऽम्रफलं विनाशं याति। तावन्निजजननीमातुलानां शरणं व्रज। मम कृते किं म्रियसे?' इत्युक्त्वा मौनमाधाय कुष्ठी स्थितः। ततो मदनमञ्जरी भणति—'नाथ! ईदृशमसमञ्जसं किं प्रलपसि? सुकुलोत्पन्नाः प्रलयेऽपीदृक् कर्म न समाचरन्ति। आर्यपुत्र! एतत् किं न श्रुतम् उत्तमनारीणां भर्तार एव देवता भवन्ति? यतः—

निब्भउ अंगं पि गलंतु लोअणा जोवणं अइक्कमउ।
जीयं पि जाउ तह वि तुह सुस्सूसं करिस्सामि॥ २॥

तं सामी तं मित्तो तं बंधू तं धणं गइं तांसि ।
तं जीयं मह पियमम किं बहुणा जंपिए णित्थ ॥ ३ ॥

हे नाथ ! तावन्ममाग्रे एवंविधं नीचजनसदृशं वाक्यं न भाषितव्यम् । तेन विद्याधरेण निजपत्न्यनुरागं ज्ञात्वा बहुरूपकारिणी देवी स्मृता । स्वामिनि ! बहुरूपकारिणि ! देवते ! साम्प्रतं जात्यसुवर्णमयं प्रासादं कुरु । ततो देवतया क्षणार्द्धेन प्रासादो निर्मितः । स कीदृशः ? पञ्चवर्णरत्ननिर्मितं यस्य भूपीठं शोभते, निर्मलस्फटिकमणिरचिता यस्य भित्त्याद्या राजन्ते, यत्र प्रासादे काञ्चनस्तम्भेषु रचिताः सहस्रसंख्या रत्नपुत्तलिका वर्तन्ते । अन्यच्च—

बत्तीसभूमिकलिऊं चामीयरकलससहससोहिल्लो ।
उत्तुंगिमाइ रविरहतुरंगपडिभग्गए पसरो ॥ ४ ॥

तस्य मध्ये सुवर्णसिंहासनोपरि स्थितं देवकुमारसमानरूपमात्मानं पश्यति कुष्ठी । तं प्रासादं दृष्ट्वा नगरलोको विस्मितः—'किं स्वर्गादवतीर्णं देवविमानम् । एष प्रासादः पूर्वं न दृष्टः पुस्तकेषु न श्रुतः । सर्वथा महाश्चर्यकारी अयं प्रासादः' इतश्च ताम्रचूडेन राज्ञा स प्रासादः श्रुतः[1] । एवं श्रुत्वा महाकौतुकपूर्णहृदयस्तस्य विलोकनार्थं चचाल राजा । यावन्निजपरिवारेण सहितो राजा तस्मिन् प्रासादे चरति तावत् स्फाटिकभित्तिरचनाकारणान्न लभते मार्गं सर्वत्र तेजोमयमेव । ततो राज्ञा महता कष्टेन लब्धो मार्गः । राजा तस्य प्रासादस्य शिखरे सिंहासनोपविष्टं दिव्यरूपं दिव्याभरणधारिणं विद्याधरं ददर्श । तं तथाविधं दृष्ट्वा राज्ञो मनसि विस्मयो बभूव इतश्च तस्य विद्याधरस्यामात्यो बुद्धिसागरनामा विद्याधरसुभटसहितस्तत्रागतः । बुद्धिसागरो राजानं प्रणम्योपविष्टः । सर्वे विद्याधरसुभटा यथास्थानमुपविष्टाः । अष्टौ वाराङ्गनाः सचामरधारिण्यश्चामराणि ढालयन्ति । अत्रान्तरे विद्याधरैर्नाटकं प्रारब्धम् । तद् दृष्ट्वा सर्वोऽपि नगरनिवासी लोको विस्मितः । ताम्रचूडोऽपि विस्मयं गतः सर्वे सकौतुकमेवं कथयन्ति—'पूर्वं कुष्ठी, साम्प्रतमेवंविधरूपः कोऽयम्? इन्द्रः किं वा कन्दर्पः ? किं वा नारायणः ? किं वा बल

१. श्रुतः is supplied by the Editor.

देवः ? किं वा धनदनामा यक्षः ?' यावत्ताम्रचूडप्रमुखः सर्वोऽपि लोक एवं चिन्तयति तावदेकेन विद्याधरसुभटेनैषा गाथा पठिता—

जय वेयड्ढनगाहिव जय बहुविज्ज[1]विजयपडिवक्खु ।
जय पणईणयवच्छल जय जय सिक्खिणगरहराय ॥ ५ ॥

एनां गाथां श्रुत्वा लोकैरिति चिन्तितम्—'निश्चितमयं विद्याधरेन्द्रः ? केनापि कारणेन कुष्ठिरूपं विधायेहागतः ।' तावदेषा मदनमञ्जरी राजपुत्री धन्या कृतपुण्या, यथा विद्याधरस्वामी अयं भर्ता प्राप्तः । अथ कनकरथराज्ञा स्वयमुत्थाय ताम्रचूडस्य राज्ञ आसनं दापितम् । अत्रान्तरे राजपत्नी मदनमञ्जरी माता धारणीनाम्नी तत्रागता । अत्रान्तरे मदनमञ्जरी ताम्रचूडं स्वपितरं प्रणम्योचे—'तात ! त्वया कुत्सितशरीराय कुष्ठिनेऽहं दत्ता, मम पुण्यप्रभावात्सोऽप्यमरकुमारोपमो जातः । यतः—

वच्चउ देशं परिभमउ काणणं सायरं मि बुड्डउ ।
सग्गेहिवि नरो पुन्नाउ पावए सुखरिंछोली ॥ ६ ॥

तत् तात ! तव वचः सत्यं किं वा मम ? राज्ञा भणितम्—'पुत्रि ! तव कथितं सत्यम् । नास्ति सन्देहः । इयन्तं कालं यावदहमात्मकुग्राहेण विडम्बितः । अतः परं सर्वस्य स्व[2]कर्म प्रमाणम् ।' इतश्च ताम्रचूडेन राज्ञा विद्याधरं प्रत्युक्तम्—'स्वामिन् ! यूयं केन कौतुकेन एवंविधं रूपं विधाय अत्रागताः ?' ततो विद्याधरेण आमूलचूलं निजवृत्तान्तो राज्ञोऽग्रे कथितः । राजा तच्छ्रुत्वा हृष्टो बभूव । ततो विद्याधरो राजानं प्रति प्राह—'राजन् ! अनुजानीत मां यथा निजपुरं गच्छामः ।' राज्ञोक्तम्—'तर्हि ममावासेऽद्य सपरिवारैः भोजनं विधाय गन्तव्यम् । विद्याधरेणानुमतं राज्ञो वचः । ततो दिव्यस्नानभोजनाच्छादनाभरणसुगन्धवस्तुप्रभृतिक्रियाभिस्तं विद्याधरेन्द्रं सन्तोष्य राज्ञा स्वपुत्री उक्ता—'वत्से ! समयान्तरे पुनर्दर्शनं दद्याः ।' इत्युक्त्वा तौ विसर्जितौ स्वनगरं प्रति । ततो विद्याधरेण दिव्यविमानं कारितम् । तस्मिन्नधिरुह्य निजभार्यासहितश्चचाल । ततो गतः स्वनगरम् । तत्रानेकानि वर्धापनकानि जातानि । ततो नगर-

१. विज्ज is missing in Z. २. स्व is missing in Z.

मध्ये महता विस्तरेण प्रवेशमहोत्सवो बभूव । कनकरथो धवलगृहं सम्प्राप्तः । मदनमञ्जरीसहितो विद्याधरः सौख्यमनुभवति । अन्यदा कस्मिन्नप्यवसरे उद्यानपालकेन योजितकरसम्पुटेन कनकरथो राजा एवं विज्ञप्तः—'देव ! वर्धाप्यसे । अद्य मनोरमे उद्याने बहुशिष्यपरिवृताः श्रीधर्मघोषसूरयः समागताः' इति उद्यानवनपालकमुखात् श्रुत्वा हृष्टो बभूव । तस्मै पारितोषिकं दत्तम् । ततो महता विस्तरेण मदनमञ्जरीसहितो गुरुनमस्करणाय चलित उद्याने सम्प्राप्तः । तत्र गुरून् वन्दित्वा देशनां शृणोति । गुरुः प्राह—'भो विद्याधर ! दुर्लभं मनुष्यत्वं लब्ध्वा धर्मविषय उद्यमः कार्यः । यतः भोगाः कीर्तिः सौभाग्यं लक्ष्मी रूपं मोक्ष एते पुण्येनैव लभ्यन्ते । तावद् भो राजन् ! इति ज्ञात्वा सकलसौख्यहेतोर्धर्मे यत्नं कर्तव्यम् ।' इति श्रुत्वा राजा पूर्वभवं पृच्छति—'भगवन् ! पूर्वभवे मया किं पुण्यं विहितं यदस्मिन् भवे मम सर्वत्र भोगाः सम्भवन्ति ।' गुरुभिरुक्तम्—'शृणु पूर्वभवे शालिग्रामे धनदेवो नाम कुटुम्बी, तस्य भार्या यशोदेवी । अन्यदा मासक्षपणपारणके तव गृहे एको मुनिरागतः । त्वया यशोदेवीभार्यासहितेन क्षीरान्नेन प्रतिलाभितः । तेन पुण्येन त्वं मृत्वा विद्याधरस्वामी जातः । अस्मिन् भवे यशोदेवी मृत्वा[1] मदनमञ्जरी तव भार्या जाता' इति कथिते द्वयोर्जातिस्मरणं समुत्पन्नम् । पूर्वभवो दृष्टो मूर्च्छामध्ये । मूर्च्छान्ते चिन्तितम्—'अल्पस्यापि दानस्य सुपात्रे दत्तस्य एतावन्मात्रं फलम् ।' ततो द्वादश व्रतानि उच्चारितानि । गुरुं प्रणिपत्य गतौ स्वस्थाने । कनकरथो निजभार्यासहितः सुपात्रे दानं ददाति । प्रान्तकाले पुत्रं राज्ये निवेश्यानशनं गृहीत्वा द्वावपि स्वर्गे गतौ ।

इति सुपात्रदानविषये कनकरथकथानकम् ॥

## माने बाहुबलिकथानकम् ।

मानं बाहुबलिर्मरीचिरचयत् श्रीस्थूलभद्रः प्रभुः
साधुः सिंहगुहास्थितो मतिमदः श्रीसिद्धसेनः कविः ।
चाणक्यः किल कोणिकः क्षितिपतिर्दुर्योधनो रावणः
सूरिः सागरचन्द्र इत्यभिमतश्चक्री चतुर्थो रुचा ॥ १ ॥

1. मृता Z.

तथाहि-विनीतायां नगर्यां श्रीऋषभदेवप्रिया सुमङ्गला सुनन्दा।

देवी सुमंगलाए भरहो बंभीय मिहुणयं जायं।
देवीसुनंदाए बाहुबली सुंदरी चेव ॥ २ ॥

श्रीऋषभदेवे व्रतमापन्ने श्रीभरतेश्वरस्य राज्ये दत्ते, अष्टनवतिपुत्राणां विभज्य राज्ये दत्ते, स्वामी केवलज्ञानमवाप। इतश्च[1] दिग्विजयं विधायाष्टनवतिबान्धवेषु राज्यानि परित्यज्य तातपार्श्वे व्रतं ग्राहितेषु षष्टिसहस्राणामनन्तरं विनीतायामागते भरते आयुधशालायां चक्रं न प्रविशति। ततस्तक्षशिलायां बाहुबलेरुपरि विग्रहं विधाय श्रीभरतः सुवेगनामानं दूतं प्रेषयति। दूतो बाहुबलिसभायां गतः। बाहुबलिः प्राह—

'श्रीतातपादैः परिपालितानां कलाकलापार्पणलालितानाम्।
कच्चिद्विनीतानगरीप्रजानामार्यस्य राज्ये जयवान् प्रमोदः ॥ ३ ॥
अनामयं देशपुरीनरेशहस्त्यश्वसेनापतिसैनिकानाम्।'
एवं समापृच्छ्य[2] नृपे निवृत्तेऽब्रवीदनावेगमिदं सुवेगः ॥ ४ ॥

दूतः प्राह—

'यस्मिन् वशीभूतनृदेवदेवे दैवोऽपि नैवापकृतौ कृती स्यात्।
तत्तत्परीवारपुरीतुरङ्गाङ्गनाय कस्याः कुशलं सृजेत्कः ॥ ५ ॥
ज्येष्ठोऽग्रजत्वेन पराक्रमेण स चक्रवर्ती तव सेव्य एव।
त्वं चेच्चिरं जीवितराज्यकामस्तन्मुच्यतां बाहुबलेऽवलेपः' ॥ ६ ॥

इत्युक्त्वा विरते बाहुबलिः प्राह—

'दूत! त्वया युक्तमिदं यदुक्तं वाग्मी त्वमेकोऽसि सैनो न तेऽस्ति।
एवं वदन् यैः[3] पुरतो ममापि स्वाम्यर्थकृत्प्राणभयं न धत्से' ॥ ७ ॥

दूतोऽर्द्धचन्द्रं दत्त्वा निर्वासितः। दूतेन गत्वा श्रीभरतस्याग्रे याथातथ्यमुक्तम्—'स्वामिन्! बाहुबलिरिति वदति बलगर्वितः। रे दूत! निजस्वाम्यग्रे गत्वा कथय कथं तद्दिनं तव विस्मृतं यत्र दिने कन्दुकवत् उच्छालितोऽसि। भो भो गङ्गासिन्ध्वबलायुगलेन नाहलैश्च

1. A. and Z. add the following after इतश्च—भरते—'मागधवरदामपभाससिन्धुखण्डप्पवायतिमिसगुहा। सट्ठिं वाससहस्से ओअवियं आगओ भरहो'। २. समा A., समां Z. ३. वैदेह्याः for वदन् यः A. and Z.

भटैः साधितैः किं गर्वमुद्वहसि' इत्युक्ते श्रीभरतः साटोपं प्रयाणढक्कां वादयामास। मिथो मिलिते सैन्ये महद् युद्धम्। अत्रान्तरे भूमिगृहस्थोऽनिलवेगो विद्याधरपुत्रो रणढक्कां श्रुतवान्। निस्सृतो दिव्यशृङ्गारभूषितो महाभटः। प्रणम्य बाहुबलिं प्रथममुत्थापनिकां ददाति। अनेकधाऽस्त्रैर्युद्धं विदधाति। सैन्यं त्रासितम्। भरतः स्वयमुत्थितवान्।

करिणो करीहिं तुरगा तुरंगमेहिं रहेहिं रहिणोय।
सुहडा सुहडेहिं तथा समगंचीय तत्थ जुज्झंति ॥ ८ ॥

अनिलवेगेनास्त्रैर्निरस्त्रीकृतो भरतो वर्षान्ते चक्रं मुञ्चति, चक्रेण समं मुष्ट्या दिव्ययुद्धमेकविंशतिदिनानि यावत्। एकविंशतिमे दिवसे तृष्णयाऽचेतनस्य अनिलवेगसुभटस्य शिरश्चक्रेण चिच्छेद। ततो बाहुबलिर्बहुजीवसंहारमालोक्य भरतस्य दूतं प्रेषितवान्—'आवयोर्युद्धं वैरञ्च। कथमयं जनसंहारः क्रियते।' भरतेन प्रतिश्रुत्य पञ्चयुद्धानि कल्पितानि—

पढमं दिट्ठीयुद्धं वायायुद्धं तहेव बाहाहिं।
मुट्ठीहिय दंडहिय सव्वत्थ वि जिप्पए भरहो ॥ ९ ॥

बाहुबलिना पञ्चसु युद्धेषु जितो भरतः। क्रुद्धश्चक्रं मुञ्चति। स्वगोत्रे चक्रं न प्रभवति। शिरसः परितः परिभ्रम्य स्वस्थाने गतं चक्रम्। बाहुबलिश्चिन्तयति—'अहो संसारपरिणामः। इति विचिन्त्य बाहुबलिर्लोचं चकार। दीक्षा गृहीता। ध्यानस्थं बाहुबलिं दृष्ट्वा भरतस्तमभिवन्दति। एवं वदति च—

'षट्खण्डजेता भरतोऽप्यहं यैरचैस्त्रिलोकीजयिभिर्जितोऽहम्।
तान्यप्यहो येन जितानि नूनं वन्दे सुनन्दातनयं भटं तम्' ॥ १० ॥

इति स्तुत्वा पुत्रं राज्येऽभिषिच्य स्वस्थानं गतश्चक्री। बाहुबलिर्वर्षं यावन्मानेन तत्रैव कायोत्सर्गे तस्थौ—'यदहं तातपादान्ते लघुबान्धवानां प्रणिपातं न करिष्यामि।' कण्ठान्तसंसक्तीरशाखिशाखासुवल्लीवितानसम्बन्धमौलिभूषणः क्रमयुग्मान्तर्भिन्नकुशाग्रो वल्मीकपर्वत इव वपुषाऽभवत्। श्रीऋषभदेवो ज्ञानेन विज्ञाय ब्रह्मीसुन्दरीसुताद्वयं प्रतिबोधाय प्राहिणोत्। ताभ्यामुक्तो मुनिः—'भ्रातर्मानगजेन्द्रादवतर' इत्युपदेशमासाद्य यावद्विषण्णो मुनिश्चरणमुत्पादयति

ततो लब्धसङ्केत इवोत्पेदे। केवलज्ञानं गतस्तातपार्श्वे केवलिपरिषदि उपविष्टः। अतो मानो न विधेयः।

इति माने बाहुबलिकथानकम् ॥

## द्यूतविषये नलकथानकम्।

अत्र भरते कोशलदेशे कोशला नाम्नी नगरी। तत्र इक्ष्वाकुकुलोत्पन्नो निषधो नाम राजा। तस्य सुन्दरी नाम्नी राज्ञी। नलकूबरौ द्वौ पुत्रौ। इतश्च विदर्भदेशे कुण्डिनपुरं नाम नगरम्। तत्र भीमरथो राजा। तस्य पुष्पदन्ती भार्या। तयोर्विषयसौख्यमनुभवतोः समुत्पन्ना पुत्री। तस्या भाले सूर्यबिम्बमिव स्वाभाविकं तिलकं वर्तते। यदस्यां गर्भगतायां मात्रा स्वप्ने दवे दह्यमानो दन्ती दृष्टः, अतो दवदन्तीति नाम कृतम्। श्वेतपक्षचन्द्रकला इव दिने दिने वृद्धिं याति। प्रस्तावे समर्पिता कलाचार्यस्य समीपे विद्याग्रहणाय। क्रमेण समग्रविद्यायां निपुणा जाता। अन्यदा तस्याः प्रकृष्टपुण्येन तुष्टा शासनदेवता। तया भाविनः श्रीशान्तिनाथदेवस्य काञ्चनमयी प्रतिमाऽर्पिता। एवमुक्ता च—'वत्से! एषा शान्तिनाथदेवस्य प्रतिमा त्वया त्रिसन्ध्यं पूजनीया।' सापि तथैव करोति। क्रमेण यौवनं प्राप्ता। तां यौवनस्थां दृष्ट्वा राज्ञा चिन्तितम्—'एषा निरुपमरूपा कस्मै दातव्या तावदस्याः समानरूपो वरो नास्ति, यदि वाऽस्ति तथापि न ज्ञायते। अतः स्वयंवरं कर्तुं युक्तं यथा निजेच्छया सा मम पुत्री वरं वृणोति।' ततो दूतं प्रेष्याकारिता राजानः। राजपुत्राश्चागता गजतुरगरथपदातिभिः परिवृताः। नलोऽपि तत्र प्राप्तः। भीमरथराज्ञा सर्वे सम्मानिताः प्रवरावासेषु। ततः कारितः काञ्चनमयस्तम्भमण्डितः स्वयंवरमण्डपः। तत्र प्रवरमञ्चास्तत्र स्थापितानि सुवर्णसिंहासनानि। तेषूपविष्टा राजानो राजपुत्राश्च। अत्रान्तरे जनकादेशेन प्रकटितप्रभाजालतिलकालङ्कृता प्रसन्नवदना घनस्तनमण्डना स्वयंवरमण्डपं मण्डयन्ती दवदन्ती समागता। तां दृष्ट्वा विस्मितमुखाः सर्वेऽपि राजानो जाताः। ततो राजादेशेनान्तःपुरस्य प्रतीहारी भद्रानाम्नी कुमार्या अग्रे राजवंशान् वक्तुं प्रवृत्ता—'देवि! दवदन्ति! अयं काशीपतिर्दृढभुजबलो बलो नाम राजा। यदि तुङ्गतरङ्गां गङ्गां नदीं द्रष्टुं वाञ्छसि तदेनं

वृणु !' दवदन्त्या भणितम्—'भद्रे ! काशीनिवासिनो लोकाः परं वञ्चनव्यसनिनो भवन्ति। ततोऽस्मिन् मम मनो न रमते। अग्रतो गच्छ'। अग्रे गत्वा तया पुनर्भणितम्—'देवि ! अयं कुङ्कुणपतिः सिंहनामा नरेन्द्रः। एनं वृत्वा ग्रीष्मकाले कदलीवनेषु सुखेन क्रीडस्व। ततो दवदन्त्या भणितम्—'भद्रे ! अकारणकोपना कोङ्कुणाः। तावत्पदे पदे न शक्नोमि एनमनुकूलयितुम्। अन्यं राजानं कथयस्व। अग्रतो गत्वा तया पुनर्भणितम्—'देवि ! अयं काश्मीरदेशनिवासी महेन्द्रो नाम राजा। कुङ्कुमक्रीडां कर्तुकामा तत एनं वृणु'—दवदन्त्या भणितम्—'हिमसंसारभीरुकं मम शरीरं किं त्वं न जानासि।' ततोऽग्रतो गत्वा पुनर्भणितं तया—'देवि ! अयं कौशाम्ब्याः स्वामी जयकोशो नाम राजा तदेनं वृणु'। दवदन्त्योक्तम्—'कपिञ्जले ! अतिरमणीया माला विनिर्मिता।' प्रतिहार्या चिन्तितम्—'अस्य राज्ञोऽप्रतिवचनमेव प्रतिषेधः।' ततोऽग्रतो गत्वा पुनरुक्तं तया—'कलिङ्गदेशस्वामिनो जयराज्ञः कण्ठे वरमालां क्षिपस्व यस्य कृपाणराहुणा वैरिशशिनः कवलीकृताः।' दवदन्त्योक्तम्—'तातसमानवयःपरिणामाय नम एतस्मै। ततो भद्रयाऽग्रतो गत्वा भणितम्—'गौडदेशपतिर्गगनमणिनामा एष किं तव रोचते यस्य करिनिकरघटरवेण ब्रह्माण्डं स्फुटति।' दवदन्त्योक्तम्—'मातर्मनुष्याणामीदृशमपि कृष्णभीषणं रूपं भवति। त्वरितमग्रतो गच्छ।' ततो भद्रयाऽग्रतो गत्वा पुनर्भणितम्—'देवि ! अयमुज्जयिनीपतिः पद्मनाभो नाम राजा। यदि सिप्रानदीतटे उद्गतेषु[1] वृक्षेषु तव क्रीडां कर्तुं वाञ्छा विद्यते तदेनं वृणु।' दवदन्त्या उक्तम्—'धिग् धिग् अनेन स्वयंवरमण्डपसंचरणपरिश्रमेण निर्विण्णाहं ततोऽग्रतो गच्छामि।' ततो भद्रयाऽग्रतो गत्वोक्तम्—'देवि ! अयं कन्दर्पसमानरूपो निषधपुत्रो नलो राजा। ततो विस्मितचित्तया दवदन्त्या चिन्तितम्—'अहो ! अस्याऽसामान्यं रूपम्, अहो ! उदग्रं सौभाग्यम्।' ततो नलस्य कण्ठे वरमाला क्षिप्ता। अहो ! सुष्ठु वृतम्, सुष्ठु वृतं दवदन्त्या' इति समुत्थितो जनकलकलः। अत्रान्तरे खड्गमाकृष्य नलमाक्षेप्तुं प्रवृत्तः कृष्णराजः—'भो नल !

1. वृक्षेषु is missing in Z.

दवदन्ती परिणेतुं न लभ्यते। अनया दवदन्त्याऽयुक्तं कृतं यत् त्वं वृतः। तावदेनां मुञ्च। अथवा युद्धसज्जो भव।' नलेन भणितम्—'अरे नराधम! यदि दवदन्त्या त्वं न वृतः ततः किं दूषितोऽसि? तावत् परित्यक्तसाधुमार्गो मया त्वं शिक्षितव्यः।' खड्गमाकृष्य ज्वलत्कोपानलो राजा बभूव। ततो द्वयोरपि दले सन्नद्धे जाते। दवदन्त्या चिन्तितम्—'हा किं मन्दभाग्याऽहं यन्मम कृत एष प्रलय उपस्थितः। तावद् यदि मम अर्हति देवे भक्तिस्ततो देवि! श्रीशासनदेवते! नलो विजयलक्ष्मीं प्राप्नोतु, उपशमतु सङ्ग्रमः' इति भणित्वा वारिपूर्णो भृङ्गारो गृहीतः। तिस्रो जलच्छटाः क्षिप्ताः। तेन स्पर्शिताङ्गो निस्तेजो बभूव कृष्णराजः। ततो रोषरहितः कृष्णराजश्चिन्तयति—'अहो मयाऽयुक्तं कृतम्। न सामान्योऽयं पुरुषः। तावन्नमस्कर्तुं युज्यते मम।' ततः कृष्णराजेन प्रणामपूर्वं क्षामितो नलः। नलेन सम्भाष्य विसर्जितः कृष्णराजः। ततो नलस्य पराक्रमं विलोक्य विस्मितेन भीमरथराज्ञा महाविस्तरेण पाणिग्रहणं कारितो नलः। करितुरगरत्नालङ्कारवस्त्रादीनि नलकुमाराय समर्पितानि। एवं विवाहानन्तरं कियन्ति दिनानि तत्र स्थित्वा पुनर्नगरीं प्रति चलितो नलः। नलेन सह व्रजन्ती दवदन्ती मात्रा एवमुक्ता—

'जंपिज्ज पियं विणयं करिज्ज वज्जिज्ज पुत्ति परनिंदं।
वसणे वि मा विमुंचसु देहत्थाय व्व नियनाहं॥ १॥
रिद्धिं पत्ता वि हु मा विहिज्ज सुविणेवि माणलेसं पि।
तह निकलंकसील पाणपणासेवि पालिज्जा'॥ २॥

इति जननीशिक्षामङ्गीकृत्य पितरौ प्रणम्य प्रस्थिता दवदन्ती। रथ आरोप्य नलेन निजोत्सङ्गे निवेशिता। ततश्च तुरङ्गबलोत्क्षिप्तक्षोणिरेणुनिकरेण रुद्धनभोमण्डलस्य राज्ञो नलस्य व्रजतोऽन्तरालेऽस्तङ्गतो रविः। अन्धकारपटलेन पूरितं भुवनगर्भम्। जलस्थलवृक्षगिरिगर्तविशेषो न ज्ञायते। तथापि निजनगरोत्कण्ठितमना गमनान्न निवर्तते नलः। अन्धकारो विलयं गतः। ततो निष्प्रत्यूहं बलं मार्गे प्रयाति। अन्यदा मार्गे गच्छतोस्तयोर्नलदवदन्त्योर्दृष्टिगोचरे भ्रमरैः खाद्यमानसर्वाङ्गो कायोत्सर्गेण स्थितो मुनिरेको बभूव। ततो नलदवदन्तीभ्यां स्वस्थीकृतो मुनिः, प्राशुकान्नैश्च प्रतिलाभ्यते। मुनिं नत्वा कियद्भिरखण्डितप्रयाणैः कोशलानगरीपरिसरे गतो नलः। नलेन

दवदन्तीं प्रत्युक्तम्—'देवि ! जिनभुवनमण्डितप्रदेशा एषा मम पुरी कोशला नाम्नी'। तया भणितम्—'धन्याऽहं नलं प्रियं प्राप्य नित्यं देवान् पूजयिष्यामि।' अथ प्रशस्तदिवसे बहुप्रकारमश्वविस्तरितर्द्धिडम्बरां प्रतिभवनं प्रणर्तितध्वजाञ्चलचुम्बिताम्बरां विविधतूर्यरवापूरितदिगन्तरां नृत्यत्तरुणीचक्रनिरन्तरां पदे पदे क्रियमाणमङ्गलो नलो निजनगरीं प्रविष्टः । ततश्च दवदन्तीसहितेन नलेन प्रणतौ पितरौ। ततश्च नलकुमारो दवदन्त्या सह कदाचिज्जलक्रीडां करोति, कदाचिद्दोलान्दोलनसौख्यमनुभवति, कदाचित् स्वयंग्रथितसुरभिकुसुमैर्विचित्रसम्बन्धधम्मिल्लं पूरयति, कदाचिद्द्यूते रमते, कदाचित् स्वयंविधातोद्यवादनपरो दवदन्तीमेकान्तेऽनर्तयत्। एवं नलो दवदन्त्या अवियुक्तो नवनवैर्विनोदैः कालमतिक्रामति। अन्यदा निषधराज्ञा नलं निजपदे निवेश्य कूबरं कुमारत्वे स्थापयित्वा दीक्षा गृहीता। ततोऽनल इव दुर्विषहतेजःप्रसरो नलो राज्यं पालयति । अन्यदा नलेन मन्त्रिणः पृष्टाः—'अहं जनकोपार्जितामेव महीं पालयामि किं वाऽधिकाम् ?' मन्त्रिभिरुक्तम्—'त्रिभागोनं भरतार्द्धं वशीकृतं किन्त्वितो द्वियोजनशतैस्तक्षशिला नगरी वर्तते। तत्र कदम्बो राजा तवाज्ञां न मन्यते। अयं त्वयोपेक्षितो रोगलेश इव दुस्साध्यो बभूव। ततः प्रथमं दूतः प्रेष्यतां येन तस्य चित्तं ज्ञायते।' ततो दूतः प्रहितो गतोऽविलम्बं तक्षशिलाम्। तेन भणितः कदम्बः—'वैरिवनदहनदावानलेन नलेन इत्याज्ञातं मम पदसेवामङ्गीकृत्य निजराज्यं परिपालय। यद्येवं न करिष्यसि ततोऽस्माद्राज्यो भ्रंशं प्राप्स्यसि' इति दूतवचनं श्रुत्वा दशनाग्रदष्टोष्ठपुट आत्मानमजानन् कदम्बराजा दूतं प्रति प्राह—'रे दूत ! तव स्वामी किं बालोऽथवा किं प्रमत्तोऽथवा वातसुतः, यः सकलरिपुभुजङ्गगरुडं मां न जानाति ? अथवा किं तस्य गुणदोषविचारज्ञाः केऽपि मन्त्रिणो न सन्ति यैरेवमसमञ्जसं जल्पमानो नलो न निषिद्धः? तावदहो! दूत! गच्छ, यदि तव स्वामी जीवितस्य निर्विण्णोऽत्यन्तं ततः सङ्ग्रामविषये सज्जो भूत्वा त्वरितमागच्छतु। अहमपि सङ्ग्रामविषये सज्जीभूय स्थितः।' ततो

1. The portion beginning with त्वरित and ending with स्थितः is missing in *Z*.

तेनापि आगत्य कदम्बोक्तं कथितं नलस्याग्रे। ततः कोपारुणितलो-चनश्चतुरङ्गसेनायुक्तो नलराजा चचाल। क्रमेण प्राप्तस्तक्षशिलायाम्। ततो वेष्टिता नलेन तक्षशिला। तामसहमानः कदम्बः सन्नह्य बहि-र्निर्गतः। विविधप्रहरणकिरणद्विगुणितदिनमणिप्रभाप्रसरं निरुद्ध-महीमण्डलं मण्डलाग्रसंघट्टसमुत्थितशिखिशिखाभासुरं सुरसिद्धप्रेक्ष्यमाणनृत्यत्कबन्धसमूहं वहद्रुधिरनदीकमलायमानसुभटमस्तकं द्वाभ्यां बलाभ्यां प्रारब्धं युद्धम्। नलेन कदम्बो भणितः—'एभिः क्रमतुल्यैः पदातिभिर्मारितैः किं प्रयोजनम्? अहं त्वञ्च द्वावपि युद्धं कुर्वः।' ततो द्वावपि बाहुयुद्धप्रमुखैर्युद्धैर्योद्धुं प्रवृत्तौ। कदम्बेन यद् युद्धं नलः प्रार्थितस्तत्र तत्र निर्जितो नलेन कदम्बः। ततः पला-यित्वा संयमं प्रतिपद्य कायोत्सर्गे स्थितः कदम्बः। ततः कायोत्सर्ग-स्थितः कदम्बो नलेनैवं भणितः 'अनेन सच्चरित्रेण त्वयाऽहं निर्जितः, तावन्निजराज्यं कुरु।' कदम्बेन न गृहीतं राज्यं निस्पृहत्वेन। ततश्च कदम्बसत्त्वरञ्जितेन नलेन जयशक्तिनामा कदम्बपुत्रो राज्ये स्थापितः। ततो नरेन्द्रैर्नलस्य भरतार्द्धराज्याभिषेकः कृतः। ततः कोशलायां समागतो राजा नलः। ततो विविधविनोदैर्दवदन्त्या सह कालं गम-यति। कूबरोऽपि निजकुलाङ्गारो राज्यलुब्धो नलस्य छलं विलोकयन् वर्तते। अन्यदा भवितव्यतावशेन नलस्य द्यूतव्यसनं जातम्। 'नलस्य राज्यं गृह्णामि' इति चिन्तयन् कूबरो नलं रमते, निरन्तरं डमरूकवद् द्वयोरपि जये सञ्चरति बहुकालो गतः। अन्यदा दैववशेन नलेन कूबरो जेतुं न शक्यते। नलस्य वाञ्छितः पाशको न पतितः। ततः क्रूरः कूबरः पुनर्नलसारिमारणं करोति। ततः कूबरेण नगरग्राम-खेटककर्बुटादीनि हरापितो नलः। ग्रीष्मे जलेन हीयमानसर इव विभवेन हीयमानो नलो बभूव। विषण्णो लोकः। द्यूतान्धबलेन सम्पाद्यमानमनोरथो हर्षितः कूबरः। नलानुरक्तेन लोकेन कृतो हाहारवः। तं हाहारवं श्रुत्वा समागता दवदन्ती। सा जल्पति—'नाथ! मम प्रसादं कुरु, त्वामहं प्रार्थयामि। एतद् द्यूतव्यसनं मुञ्च, निश्चितं वैरिण इव तव व्यसनदानदक्षा इमे अक्षाः। वरं लघुबान्ध-वस्य कूबरस्य एतद् राज्यं स्वयं देहि, पुनरात्मनोऽकीर्तिं माऽर्जय। अनेकयुद्धप्रारम्भैरर्जितं राज्यं द्यूतेन हारितं सिक्थमिव मम चित्तं

कूययन्ति' इति भणितोऽपि नलो द्यूतान्न निवर्तते। ततो दवदन्त्या मन्त्रिणः प्रहिताः। ततो बहुविधमुक्तोऽपि नलो द्यूतान्न निवर्तितः। सन्निपातगृहीतस्य किञ्चिद् भेषजादिकं न सम्भवति। ततश्च हारितसमग्रराज्यो हारितदवदन्तीप्रमुखान्तःपुरो हारितशरीरपरिहितसकलाभरणो नलो बभूव। ततः कूबरेण भणितम्—'मम राज्यं त्यज, अत्र मा तिष्ठ। एतद् राज्यं पूर्वं तव पित्रा दत्तम्, साम्प्रतं पुनर्ममाक्षैर्दत्तम्।' ततो नलः परिहितवस्त्रद्रव्यो राज्यं त्यक्त्वा चलितः। दवदन्त्यपि नलेन सह चलन्ती कूबरेण निषिद्धा—'मृगाक्षि! त्वं मा गच्छ, मया त्वं द्यूते जितासि। ममान्तःपुरमलङ्कुरु।' ततो मन्त्रिभिरुक्तः कूबरः, परपुरुषच्छायामपि न स्पृशति दवदन्ती। तावदेतामन्तःपुरे मा क्षिपस्व, यतो ज्येष्ठबान्धवस्य पत्नी जननीवद् द्रष्टव्या। ततो यदि हठेनैवं करिष्यसि ततो महासत्याः शापेन क्षारोत्करो भविष्यसि, यतः—सतीनां नहि किमपि दुष्करम्। अन्यच्च नलं प्रति ग्रामनगरदानेनालं तव, किन्तु पाथेयसहितं ससारथिमेकं रथं समर्पय।' एवममात्यभयेन कूबरेण विसर्जिता दवदन्ती, पाथेयसारथिसहितः समर्पितो रथः। नलेनोक्तम्—'येन मया भरतार्द्धविजयोपार्जिता लीलया लक्ष्मीस्त्यक्ता तस्य मम रथेन किं प्रयोजनम्? प्रधानैर्भणितो नलः—'चिरसेवकानप्यस्मान् त्वामनुव्रजतः कूबरो निवारयति। किञ्चास्मिन् वंशे यो राजा तं सेवामो वयम्, अस्माकमयं क्रमः। साम्प्रतं दवदन्त्येव तव भार्या मन्त्री, पदातिरेषा शिरीषकुसुमसुकुमारशरीरा सूर्यकरनिकरसन्तप्तरेणुकणदुर्गमे मार्गे कथं कमलकोमलाभ्यां चरणाभ्यां चलिष्यति? ततः स्वामिन् एनं रथं गृहाण, दवदन्त्या सह समारुहस्व रथम्।' एवं प्रधानैः प्रार्थितो रथमारुह्य दवदन्त्या सह प्रस्थितो नलः। स्नानोद्यतामिवैकवस्त्रां दवदन्तीं दृष्ट्वा नगरनारीभिः प्ररुदितम्। इतश्च नलेन व्रजता नगरीमध्ये हस्तपञ्चशतप्रमाण एकः स्तम्भो दृष्टः। राज्यभ्रंशोद्भवं दुःखमजानता कौतुकेन कदलीस्तम्भ इव लीलयोन्मूलितः पुनस्तत्रैवारोपितः। एवं दृष्ट्वा नागरिकैरुक्तम्—'अहो एवं बलशालिनोऽपि नलस्य दैवयोगेन राज्यभ्रंशः। पूर्वं नगरोद्याने कूबरेण सह क्रीडतो नलस्य दिव्यज्ञानी मुनिः समागतः। तेन नलं दृष्ट्वोक्तम्,

च नलो दक्षिणभरतार्धस्वामी भविष्यति, नगरमध्ये स्थितं हस्त-
शतप्रमाणं स्तम्भं चालयिष्यति। एतद् द्वयमपि मिलितमस्माभि-
जनैर्दृष्टम्। यत् पुनर्नले जीवति कोशलायामन्यो राजा सञ्जातः
तद्विसंवदति। अथवा नाऽन्यथा केवलिवचनम्। न नन्दिष्यति
कूबरः। नल एव राजात्र भविष्यति।' एवं श्लोकसंलापं शृण्वन्
दवदन्त्या सह रथाधिरूढो निर्गतो नलः। नलेन दवदन्ती पृष्टा—
देवि! कुत्र व्रजामो वयम्? तयोक्तम्—'देव! कुण्डिनपुरं प्रति
गच्छथ। तत्र प्राघूर्णकीभूय अनुगृह्णीत मे तातम्।' ततो नलादेशेन
सारथिना कुण्डिनपुरं प्रति प्रेरिता रथतुरङ्गमाः। क्रमेण घुरघुराय-
माणव्याघ्रचित्रत्रस्तपान्थव्यूहं रौद्रशब्दशार्दूलसंहतहरिणसमूहं विष-
मविषमविसर्पमाणसर्पभीषणं दृश्यमानश्वापदसमूहभीषणमेवंविधमरण्यं
गतो नलः। तत्र वने करविधृतधनुर्बाणैर्भिल्लैर्निरुद्धो नलः। रथं
मुक्त्वा तेषां सम्मुखो बभूव नलः। ततश्च स दवदन्त्या करे धृतः।
स्वामिन्! एषु शृगालरूपेषु तव सिंहवत् क आक्षेपः?। भरतार्द्ध-
विजयलक्ष्मीविलासभुवनम् एषु तव कृपाणः। किं न लज्जसे?'
ततो दवदन्त्या शीलमाहात्म्यदुस्सहा मुक्ता हुङ्कारा हरिणा इव।
सिंहगर्जितैस्तैर्हुङ्कारैः प्रनष्टा दिशोदिशं भिल्लाः। भिल्लानां पृष्ठे नलेन
समं दवदन्ती दूरं गता। इतश्चान्यभिल्लै रथो गृहीतः। विपरीतविधौ
पुरुषस्य पुरुषकारः किं करोति? तस्मिन्नरण्ये[1] दवदन्त्याः करं
गृहीत्वा पाणिग्रहणोत्सवं स्मारयन् चालितो नलः। दर्भाग्रभिन्नकोमल-
चरणकमलस्रवद्रुधिरबिन्दुभिर्दवदन्त्या तदरण्यमिन्द्रगोपाङ्कितं
कृतम्। दवदन्त्या प्रथमं यः पट्टबन्धो मस्तके बभूव नलेन साम्प्रतं
स निजवस्त्रखण्डैः पादयोः कृतः। ततो नलो मार्गगमनखिन्नां
वृक्षःस्थले निषण्णां दवदन्तीं न्यूनपरिधानाञ्चलवीजनेन वीजयति।
नलिनीपत्रपुटेषु सलिलमानीय दवदन्तीं पाययति। इतश्च दवदन्त्या
पृष्टम्—'स्वामिन्! अद्यापि कियद् गन्तव्यम्?' नलेनोक्तम्—'देवि!
योजनशतमेतदरण्यम्। अद्यापि पञ्चैव योजनानि उल्लङ्घितानि। ततो
धीरा भव।' तयोरेवमुक्तवतोरस्तंगतो रविः। ततश्च कोमलपल्लवैः
प्रशस्तः प्रस्तरो विहितो नलेन। दवदन्ती एवमुक्ता—'देवि! अत्र

१. A. adds निजकरेण after ०न्नरण्ये।

शयनं कुरु, भयशङ्का न कर्तव्या, अहं प्रहरके स्थितोऽस्मि' इत्युक्त्वा नलेन निजनिवसनार्द्धं स्रस्तरे क्षिप्तम्। ततो देवान् वन्दित्वा पञ्च-परमेष्ठिं स्मृत्वा प्रसुप्ता दवदन्ती। तस्यां निद्रायमाणायां नलेन चिन्तितम्—'येषां श्वशुरः शरणं ते पुरुषाः पुरुषेषु रेखां न लभन्ते। ततोऽहमीदृगवस्थायां न पितृगृहे व्रजामि। हृदयं वज्रवत्कठिनं कृत्वा प्रियामपि दवदन्तीं मुक्त्वा रङ्कवद् आत्मोदरं गृहीत्वाऽन्यत्र व्रजामि। दवदन्त्याः शीलप्रभावेन कोऽप्यपायो न भविष्यति यतः सतीत्वशील-मेव सर्वाङ्गरक्षणकरं सन्नाहः।' ततः क्षुरिकया निजनिवसनार्द्धं छिन्नम्, दवदन्तीवस्त्राञ्चले निजरुधिरेणाक्षराणि लिखितानि—

बडरुक्खदांहिण दिसिहं जाइ विदब्भह मग्ग।
वामदिसिहिं भावइ तहि भावै तह लग्गु ॥ ३ ॥

ततश्च निश्शब्दं रुदन् चौरवन्निश्शब्दपदो गन्तुं प्रवृत्तो नलः। प्रसुप्तां दवदन्तीं मुक्त्वा चलितकन्धरं विलोकयन् कियद्भूमिभागं गत्वा पुनः चिन्तितं नलेन—'अरण्ये प्रसुप्तां बालामनाथामेनां व्याघ्रो वा सिंहो वा भक्षयिष्यति ततो मम का गतिर्भविष्यति अतः कारणा-त्सूर्योदयं यावद्रक्षाम्येनाम्, प्रभातकाले व्रजत्वेषा निजेच्छया।' तत-स्तैरेव पादैर्निवृत्तो नलः। भूमिसुप्तां दवदन्तीं दृष्ट्वा चिन्तितं नलेन—'हा! दवदन्ती एकवस्त्रा एकाकिनी शून्यारण्ये स्वपिति। अहो! नलस्यासूर्यम्पश्यमन्तःपुरम्। मम कर्मदोषेण एनामवस्थां गता दव-दन्ती। तावत् किं करोमि? अहं हताशोऽनाथामिव प्रियां महीपीठे लुठितां विलोकयन्नपि यदहं न लज्जे तन्निश्चितं निर्लज्जोऽहम्। वज्र-घटितोऽस्मि। अथवा यन्मया एषा दवदन्ती अरण्ये मुक्ता तावत् पतिव्रतामेनां मुक्त्वाऽन्यत्र गन्तुं मम मनो नोत्सहते।' जीवितं मरणं वा ममाऽनया सह भवतु। अथवाऽपायशतसङ्कुलेऽरण्येऽहमेव भवामि दुःखभाजनम्। एषा पुनः वस्त्रलिखितं ममादेशं कुर्वती स्वजनभुवने गत्वा सुखेन तिष्ठतु।' एवं कृतनिश्चयो रजनीं गमयित्वा दवदन्तीजागरणकाले तिरोहितः त्वरितपदक्षेपं नलः। इतश्च रजनी-विरामे दवदन्त्याः स्वप्नो दृष्टः—'फलपुष्पमनोहरे सहकारवृक्षेऽहमा-रूढा, मया तस्य पेशलानि फलानि भक्षितानि। ततश्च वनगजेन सहसैवोन्मूलितः सहकारवृक्षः ततोऽहं पृथ्वीतले मुक्त्वा पतिता।'

अथ प्रतिबुद्धा दवदन्ती नलमदृष्ट्वा यूथभ्रष्टा हरिणीव दिशो विलो-कयितुं प्रवृत्ता। 'हाऽतिशयेनाहितं कृतं यत् शून्यारण्येऽशरणप्रिय-तमेन मुक्ताऽस्मि। अथवा प्रभाते मम वदनशुद्धिसलिलानयनार्थं कापि जलाश्रये गतो भविष्यति। अथवा निरुपमरूपलुब्धया कयापि विद्याधर्या क्रीडार्थं नीतः।

ते द्रुमाः पर्वतास्तेऽपि तदरण्यं च सा च भूः।

एकमेव न पश्यामि नलं कमललोचनम्' ॥ ४ ॥

एवमनल्पविकल्पव्याकुलचित्ता दिशो विलोकयन्ती नलम-पश्यमाणा भीता स्वप्नार्थं विचारयितुं प्रवृत्ता—'यः पुष्पफलसमृद्धः सहकारवृक्षः स नलो राजा, यन्मया फलान्यास्वादितानि तद् राज-सौख्यम्, यद् वनगजेन सहकारवृक्ष उन्मूलितस्तद्दैवयोगेन नलस्य राज्यभ्रंशः। यत्पुनः तस्मात् सहकारवृक्षादहं पतिता ततोऽहं नलाद् भ्रष्टा जाता। ततोऽनेन स्वप्नेन दुर्लभं मम नलस्य दर्शनम्'। ततो मुक्त-कण्ठमुच्चैःस्वरं रोदितुं प्रवृत्ता दवदन्ती यत् कातरचित्तानां स्त्रीणां व्यसने समुपस्थिते धीरिमा न भवति। 'हा नाथ! त्वयाऽहं कथं त्यक्ता? किं तव भारकारिणी भवामि। सर्पस्यापि निजा कंचुलिका भारं न करोति। भो वनदेवताः! युष्मानहं प्रार्थयामि मे प्राणनाथं दर्शयथ। अथवा पवित्रितं मार्गं दर्शयथ। पक्ववालुंकफलमिव स्फुट धरणि! यथा तेन विवरेण पातालं प्रविश्य निर्वृत्तिं प्राप्नोमि।' एवं विलपन्ती अश्रुजलसारणीभिररण्यवृक्षान् सिञ्चन्ती नलं विना कुत्रापि तस्मिन् स्थले रतिमप्राप्नुवन्ती वस्त्राञ्चलेऽक्षराणि दृष्ट्वा विकसद्वदना दवदन्ती वाचयति—'निश्चितं प्रियतमेन त्यक्ताऽहं देहमात्रेण न पुनश्चित्तेन। अन्यथा कथमादेशदानेनानुगृहीतास्मि। ततो गुरुवाक्य-मिव निजपतेराज्ञां कुर्वत्या मम निर्मल इह लोकः। अतो व्रजामि पितुर्गृहम्। यत्पुनर् भर्तृभवनं पतिं विना तत् पराभवस्थानं नारी-णाम्' इति निश्चित्य चलिता वटवृक्षस्य दक्षिणदिशो मार्गेण पार्श्वस्थितं नलमिव नलाक्षराणि विलोकयन्ती। विमलशीलप्रभावेन तस्याः केऽ-प्युपद्रवा न प्रभवन्ति। कोपवशसज्जितक्रमोऽपि[1] सिंहो दवदन्ती-माक्रमितुं न शक्तः। गन्धलुब्धभ्रमरबधिरितसकलदिक्चक्रं विस्तृत-

1. A. and Z. add कुटिलं दंष्ट्रयाः प्रेष्य एवंविधः after क्रमोऽपि।

शुण्डादण्डं कुपितमपि गजकुलं दवदन्तीशीलप्रभावेन दूरं याति। धूमध्यामलितदिक्चक्रो महज्ज्वालाहितगगनाग्रपार्श्वोऽप्राप्तोऽकृत-सन्तापो वनदवो विध्माति । विस्फारितस्फारफणा हुङ्कारविमुक्त-विषोत्कराः प्रसरद्रोषविह्वला एवंविधा विषधरास्तस्याः प्रहर्तुं न क्षमाः । अथ मार्गपरिश्रमस्वेदजलक्लिन्नगात्रया कण्टकविद्धपादतल-क्षुरद्रुधिरया धूलधूसरशरीरया दवदन्त्या दृष्टः सार्थ एकः समापतत। ततश्चिन्तितं दवदन्त्या—'अहो मम पुण्योदयेन अरण्यनिस्तारणका-रणं मया प्रशस्तः सार्थो दृष्टः । यावत्किञ्चित् स्वस्थीभूता तावत्समन्ताद् विविधायुधभयङ्करैस्तस्करै रुद्धः सार्थः। संत्रस्ता लोकाः।' दवदन्त्या भणितम्—'भो मा बिभ्यथ' इति । उक्तास्तस्कराः—'अरे दुराचाराः ! मया रक्ष्यमाणम् एनं सार्थं मा लुण्टयथ, अन्यथाऽनर्थं प्राप्स्यथ।' तथापि न विरमन्ति चौराः । ततस्तया शीलप्रभावदुस्सहा मुक्ता हुङ्काराः । तैर्धनुर्गुणटङ्कारैर्वायसा इव सर्वे प्रनष्टाश्चौराः । ततश्च सार्थलोकेन भणितम्—'अस्मत्पुण्यैराकृष्टा काप्येषा वनदेवता समागता यया एभ्यो रक्षितः सार्थः।' सार्थवाहो जननीमिव तां प्रणम्य पृच्छति—'देवि ! कासि त्वम्, कथमरण्ये परिभ्रमसि ?' ततो दवदन्त्या रुदत्या तस्याग्रे सर्वो निजवृत्तान्तः कथितः । तेनोक्तम्—'महाराज्ञ! नलस्य भार्या मम पूजनीयाऽसि त्वया तस्करेभ्यो रक्षन्त्या उपकारितोऽहम् । ततो ममावासं पवित्रीकुरु' इति भणित्वा निजावासे नीता सार्थवाहेन । देवतामिव तां पूजयति । अत्रान्तरे प्राप्तो वर्षाकालः। त्रिरात्रं निरन्तरा वृष्टिः सञ्जाता। दवदन्ती सुखेन स्थिता। तत्र विरतायां वृष्टौ सार्थं मुक्त्वा एकाकिनी पुनश्चलिता दवदन्ती। ततश्च मार्गे गच्छन्ती पीतकेशं भ्रमरकुलकृष्णशरीरं कर्तिकाकराल-करमेवंविधं राक्षसं पश्यति दवदन्ती। ततो भणितं राक्षसेन—'अहो! सप्तपदं बुभुक्षितस्य मम भक्ष्यमुपस्थितम्।' दवदन्त्योक्तम्—'भद्र! जातस्य जीवस्य ध्रुवं मृत्युः। अकृतार्थस्य मृत्युभयम्। अहमनेक-दुःखदुःखिता दुःखमोक्षकृते मरणं प्रार्थयामि। त्वमपि नलविरहा-नलदग्धां मां सुखेन भक्षयिष्यसि। ततो भद्र मां किं विलम्बसे। एष मया तुभ्यमात्मा समर्पितः। मरणं विना दुःखानां जलाञ्जलिः कुतो जायते?' ततस्तस्याः सत्त्वेन तुष्टो राक्षसः। तेन भणितम्—'भद्रे! तुष्टोऽस्मि तव किं प्रियं करोमि?' तयोक्तम्—'यदि तुष्टो-

ततः कथय कदा मम पतिसङ्गमो भविष्यति ?' विभङ्गबलेन
। भणितं राक्षसेन—'प्रवासदिवसादारभ्य सम्पूर्णेषु द्वादशवर्षेषु
ोहस्थितायाः स्वयमेव मिलिष्यति नलस्तव।' पुनस्तेन भणितम्—
न मार्गखेदेन किम् ! यदि भणसि ततो निमेषमात्रेण त्वां पितृ-
रे नयामि।' तयोक्तम्—'कृतार्थाऽहं नलसङ्गमकथनेन नाह
रुषेण समं व्रजामि। व्रज त्वं स्वस्थाने।' प्रभापुञ्जभास्वरं देवशरीरं
र्त्वाऽदृश्यो बभूव राक्षसः। द्वादशवार्षिकं नलप्रवासं ज्ञात्वा दव-
ा नियमा गृहीताः—'रक्तवस्त्राणि ताम्बूलं विभूषणविलेपनं
तथान्नं ग्रहीष्ये न यावन्मिलिष्यति मे नलः।' ततस्तीव्रतपश्चरणपरा
ुके बीजरहितफलविहितप्राणवृत्तिश्चित्तस्थितां श्रीशान्तिनाथ-
मां ध्यायन्ती गिरिगुहायां स्थिता। सार्थवाहः सार्थमध्ये तामदृष्ट्वा
ान्तचित्तः सर्वत्र विलोकयन् गिरिगुहायां समागतः। ध्यान-
प्त्या तया सम्भाषितः सार्थवाहः। तयोः संलापं श्रुत्वा सम्प्राप्ता-
केऽपि तापसा हरिणा इव निश्चलकर्णाः स्थिताः। अत्रान्तरे
ाधाराभिर्वर्षितुं प्रवृत्तो मेघः। सञ्जातभयया दवदन्त्या भणितम्—
ा मा बिभ्यथ। तेषां परितश्चतुर्दिक्षु कुण्डं कृत्वा[२] कृता शोल-
णा। यदि मम अखण्डितं शीलं ततः कुण्डबाह्ये वर्षतु मेघः।'
तृणच्छन्ने गृह इव न निपतितं जलम्। अन्यत्र प्रस्तरा अपि पयः-
ा प्लाविताः। तद् दृष्ट्वा विस्मितचित्तैस्तापसैश्चिन्तितम्—'अहो !
ष्या ईदृग् रूपम् ईदृशी शक्तिर्न भवति। ततो नूनं कापि देवता
।' सार्थवाहेनोक्तम्—'देवि ! किं त्वं ध्यायसि ? किं वा निर्भया
सि ?' तयोक्तम्—'अहमर्हन्तं देवं ध्यायामि तस्य प्रभावान्नास्ति
मम।' देवगुरुधर्मस्वरूपं सविस्तरं कथयित्वा जिनधर्मप्रतिपत्तिं
ेतः सार्थवाहः। तापसा अपि सम्प्राप्तक्षीरपानाः काञ्जिकमिव
धर्मं निन्दन्तो जिनधर्मे प्रपन्नाः। तत्र सार्थवाहेन नगरं कारितं
ापसानां पञ्चशतानि प्रतिबुद्धानि। ततस्तस्य नगरस्य तापसपुरं
 कृतम्। तत्र जिनमन्दिरं कारितम्। मध्ये श्रीशान्तिनाथप्रतिमा
पिता। सर्वेऽपि जिनधर्मपराः कालमतिक्रामयन्ति। अन्यदा रात्रि-
द्वयसमये गिरिशिखरे दवदन्त्या उद्योतो दृष्टः। उत्पतन्तो निप-

१. विकृतयो न A. and Z. २. कृत्वा is missing in Z.

तन्तश्च देवा दृष्टाः। तेषां जयजयरवैर्नगरवास्तव्या लोका जागृताः। तैः सह पर्वतं समारूढा दवदन्ती। तत्र देवैः सिंहकेसरिमुनेः केवलिमहिमा कृता। तं मुनिं नमस्कृत्य सर्वेऽग्रे उपविष्टाः। इतश्च तस्य केवलिनो मुनेर्यशोभद्रनामा गुरुस्तत्र समागतः। सोऽपि केवलिनं नत्वाऽग्र उपविष्टः। केवलिना धर्मदेशना कृता। अत्रान्तरे गगनमण्डलमुद्द्योतयन् तत्रैको देवः समागतः॥ केवलिनं नत्वा तेन भणिता दवदन्ती—"भद्रे! अत्रैव तपोवने कुलपतेः शिष्यः कर्परो नाम। अहं पञ्चाग्निसाधकः परं तापसा मयि कोपं कुर्वन्ति। ततस्तेषु रोषं वहन्नन्यत्र गतोऽहम्। अन्यदा रात्रौ रोषान्धो मार्गे व्रजन् निपतितो गिरिकन्दरायाम्। गिरिदन्ताग्रलग्ना भग्ना मम दन्ताः। दन्तभङ्गपीडापरवशोऽहं तत्रैव पतितः स्थितः। सप्तरात्रं दुःस्वप्नस्येव तापसैर्मम वार्तापि न कृता किं पुनः प्रतीकारः? विशेषतो भुजङ्ग गृहान्निर्गत इव तपोवनात्तस्मिन्निर्गते तापसानां सुखं सञ्जातम्। सोऽप्यहं तापसेषु विशेषोल्लसितकोपो मृत्वा तत्रैव तापसारण्ये सर्पो बभूव। कदाचित्कृतफणाटोपोऽहं तव दशनार्थं प्रधावितः। त्वया मां दृष्ट्वा पठितः परमेष्ठिमन्त्रः। तेन परमेष्ठिमन्त्रेण कर्णगोचरतां गतेन मम रुद्धा गतिः। पुनरपि बिलं प्रविष्टः। अन्यदा त्वया तापसानां कथ्यमानं धर्मं शृणोमि। यः क्रोधमानमायालोभानुगतः प्राणिवधं करोति स द्वितीयभवे उग्रदुःखानि प्राप्नोति। ततो मया चिन्तितम्—अहं कथं भविष्यामि यो जीववधेनैव जीवामि। एते व तापसाः कुत्रापि पूर्वं दृष्टा मया इतीहापोहं कुर्वतो मम जातिस्मरणं सञ्जातम्। संवेगपूर्वं पूर्वदुष्कृतानि निन्दता मया कृतमनशनम्। सोऽहं मृत्वा सौधर्मे समुत्पन्नो देवः कुसुमप्रभनामा। भवधर्मवचनश्रवणात् प्राप्तं मया देवत्वम् इति कारणात् त्वामुपकारिणीं दृष्ट्वाऽहमागतः। ततोऽहं तव धर्मपुत्रः।" तेन तापसा भणिताः—'क्षाम्यत मम पूर्वकोपाचरणम्।' पूर्वप्रतिपन्नं श्रावकव्रतं पालयति। गिरिकन्दरायास्तत् सर्पकलेवरं समाकृष्य एकस्मिन् वृक्ष उल्लम्बितमिति भणितञ्च—'यः कोऽपि कोपं करिष्यति स कर्पर इव परभवे सर्पो भविष्यति।' ततः संविग्नचित्तेन कुलपतिना भणितः केवली—'भगवन्! मम दीक्षां देहि।' केवलिनोक्तम्—'एष यशोभद्र-

त्वां दीक्षयिष्यति । पुनः कुलपतिना उक्तम्—'भगवन्
भिः कथं दीक्षा गृहीता ।' केवलिनोक्तम्—'कोशलायां नगर्यां
स्य पुत्रोऽहम् । सङ्गानगरीस्वामिना केसरिणा बन्धुमती नाम्नी
दत्ता निजपुत्री । जनकादेशेन मया गत्वा तत्र सा कन्या
ीता । तया सह निवृत्तेन मार्गे समवसृतोऽयं जयभद्रनामाचार्यो
परमभक्त्या वन्दितः । श्रवणामृतसारिणी तस्य मुखान्मया
ा श्रुता । देशनान्ते मया पृष्टम्—'भगवन् ! मम कियदायुर्वर्तते ?
दत्तोपयोगेन गुरुणोक्तम्—'वत्स ! पञ्चैव दिवसानि तवायुः ।'
मयाऽऽसन्नं मरणं ज्ञात्वा उक्तम्—'भगवन् ! स्तोकजीवित-
ऽहम्, साम्प्रतं किं करोमि ? गुरुणोक्तम्—'वत्स ! मा कुरु
न्, दीक्षां गृहाण, यत एकदिवसमपि प्रतिपालिता दीक्षा एषा
ापवर्गकारणम् ।' ततोऽहं प्रतिपन्नो दीक्षां गुरुनिदेशेन । अत्रा-
ऽहं शुक्लध्यानानलेन दग्धकर्मेन्धनः केवलज्ञानं प्राप्तः ।' एवं
यित्वा कृतयोगनिरोधः क्षपितभवोपग्राहिकर्मा सिंहकेसरी मोक्षं
। देवैः केवलिशरीरस्य संस्कारो विहितः । कुलपतिना यशो-
सूरिपार्श्वे दीक्षा गृहीता । दवदन्त्या भणितम्—'भगवन् !
पि दीक्षां देहि ।' सूरिणा भणितम्—'भद्रे ! त्वयाऽद्यापि नलेन
भोगा भोक्तव्याः । अतो नार्हसि त्वं दीक्षाम् ।' प्रभाते पर्वता-
र्थे यशोभद्रसूरिस्तापसपुरे समागतः । एवं धर्मप्रसक्ता मलिन-
ाः सप्तवर्षाणि गिरिगुहायां स्थिताः । अन्यदा तयाऽकस्मादेवं
यथा 'दवदन्ति ! अमुकप्रदेशे तव पतिर्मयाऽद्य नलो दृष्टः ।'
श्रुत्वा वचनानुसारेण प्रधाविता दवदन्ती गता दूरम् अरण्ये
ता नलमविलोकयन्ती रोदितुं प्रवृत्ता । 'हा किं करोमि, कुत्र
मे' इति विलापं कुर्वती तामेव गिरिगुहां गन्तुं प्रवृत्ता । ततश्च
ारितवदनया 'भक्षयिष्यामि' इति भणन्त्या एकया राक्षस्या दृष्टा
दन्ती । तयापि शीलप्रभावाद् भक्षितुं न शक्ता । ततो राक्षसी
ादृष्टेवादृश्या बभूव । अग्रतो गच्छन्त्या तया एका निर्जला नदी
। । पिपासापीडितया पार्ष्णिप्रहारेण शीलप्रभावादुत्पादितं जलम् ।
जलं पीत्वा पुनः प्रस्थिता । पुरतः परिश्रान्ता वटवृक्षस्य तले
प्रान्ता सार्थपुरुषैर्दृष्टा । तैर्भणिता—'भद्रे ! का त्वं देवीव दृश्यसे ?'
ोक्तम्—'मानुषी अहं सार्थपरिभ्रष्टाऽस्मिन्नरण्ये सञ्चरामि ।

[ण]मना वाप्युपकण्ठे उपविष्टा। तत्राचलपुरे ऋतुपर्णो नाम [राजा]ऽस्ति। तस्य चन्द्रयशा नाम्नी राज्ञी। तस्या दासीभिर्दृष्टा दव-[दन्ती]—'अहो! अस्या रूपम्' इति विस्मिताभिर्गत्वा कथितं चन्द्र-[यश]सा अग्रे। तयाऽपि आत्मसमीप आनायिता दवदन्ती पृष्टा च [—'क]ाऽसि त्वम्?' दवदन्त्योक्तम्—'वणिक्पुत्र्यहमरण्ये त्यक्ता' [चन्द्र]यशया उक्तम्—'चन्द्रवती पुत्रीव मम वर्तसे? अतः सुखेन [मम] गृहे तिष्ठ।' इतश्च दवदन्ती नगरपरिसरे प्रतिदिवसं दीना-[नाथा]नां दानं ददाति। अन्यदा दानशालायां स्थिता तलारकैर्नीयमानं [...]बन्धैर्बद्धं चौरं पश्यति। ततः पृष्टं दवदन्त्या—'अनेन किं [विन]ाशितं भोः!' तैरुक्तम्—'चन्द्रवतीकरण्डकाऽपहृताऽनेन। [अतो]ऽयं हन्यते।' चौरोऽपि दन्तैरङ्गुलीर्गृहीत्वा दवदन्तीं भणति—[मात]! मोचय माम्, समागतोऽहं तव शरणम्।' दवदन्त्या कृता [...]श्रावणा। शीलप्रभावात्तस्य बन्धास्त्रुटिताः। दूरीभूतास्तलारकाः। [तद्] वृत्तान्तं श्रुत्वा तत्र समागतो राजा। राज्ञोक्तम्—'वत्से! [...]तदयुक्तं कथं कृतम्? तस्करो रक्षितुं न युज्यते।' दवदन्त्यो-[क्तम्]—'देव! कृपापरवशचित्तया मया एवं कृतम्। अयं ममापराधः [क्षन्त]व्यः।' ततो मुक्तस्तस्करो राज्ञा। चौरोऽपि निजमातरमिव [प्रति]दिवसं दवदन्तीं प्रणमति। अन्यदा दवदन्त्या चौर एवमुक्तः—[कस्]त्वम्? कुतः समागतः?' चौरेणोक्तम्—'त्वं कथं नोपलक्षयसि [...]? अहं तापसपुरवास्तव्यवसन्तसार्थवाहस्य पिङ्गलो नाम [दास]ः। अन्यदा द्यूतादिव्यसनासक्तेन मया वसन्तसार्थवाहस्य गृहे [...] पातयित्वाऽपहृतं सारद्रव्यम्। तद् गृहीत्वा मार्गे गच्छतो मम [...]चौरैर्गृहीतम्। ततोऽहमत्राचलपुरे आगतः। ऋतुपर्णो राजा [...]तः। अन्यदा चन्द्रवत्या रत्नकरण्डकां दृष्ट्वा मम चित्तं चलितम्। [...] मया गृहीतो रत्नकरण्डकः। तद्रूपं ज्ञात्वा राजादेशेन [तलार]कैर्बद्धः। वधार्थे नीयमानेन मया त्वं दृष्टा। ततस्त्वया [मोचि]तः। किञ्च तापसपुरात्त्वयि गतायां वसन्तसार्थवाहः सप्तरात्रं [...] त्यक्त्वा स्थितः। ततः सप्तदिवसप्रान्ते यशोभद्रसूरिणा [...] भोजनं कारितः। अन्यदा प्रधानप्राभृतं गृहीत्वा [वसन्त]सार्थवाहः कूबरं द्रष्टुं कोशलायां गतः। ततस्तुष्टेन कूबरेण

न्तसार्थवाहाय तापसपुरप्रभुत्वं दत्तम्। ततस्तूर्यरवापूरितदिग-
रो वसन्तः श्रीशेखरो निजगृहे समागतः। तत्र तापसपुरराज्यं
रोति।" दवदन्त्या भणितम्—'वत्स दीक्षां गृहाण।' तेनोक्तम्—
तर्यत्त्वं कथयिष्यसि अहं तदेव करिष्यामि।' ततः पिङ्गलेन गृहीता
क्षा। इतश्चान्यदा भीमरथराज्ञा इति श्रुतं यन्नलेन द्यूतासक्तेन
ज्यं हारितम्। दवदन्तीं गृहीत्वा महाटवीं प्रविष्टः। न ज्ञायते कुत्रापि
जीवति अथवा मृतः। तच्छ्रुत्वा स्थूलाश्रुसलिलसिच्यमानहृदया
खिता पुष्पदन्ती। ततो भीमरथराज्ञा तयोर्विलोकनार्थं प्रभुकार्य-
रणपटुः प्रेषितो हरिमित्रनामा वटुः क्रमेण परिभ्रमन् अचलपुरे
ागतः। ऋतुपर्णराज्ञः पार्श्वे गतः। चन्द्रयशया पृष्टम्—'मम
गन्याः पुष्पदन्त्याः कुशलम्?' वटुकेनोक्तम्—'नित्यमपि कुशलं
दन्त्याः। किन्तु नलदवदन्त्यो राज्यभ्रंशश्रवणात् पुष्पदन्त्या महान्
तसन्तापो वर्तते।' चन्द्रयशया उक्तम्—'वटुक! नल एवं किं
सि?' ततो हरिमित्रवटुकेन मूलादपि नलदवदन्त्योर्वृत्तान्तः
ितः। एवं श्रुत्वा चन्द्रयशा अत्यर्थं रोदनं करोति। तां रुदतीं
सकलोऽपि राजलोको रोदिति। सर्वं शोकनिर्भरं दृष्ट्वा क्षुधा-
ततो वटुको दानशालायां गतः। तत्र भोजनार्थं प्रविष्टः। तत्र
ाधिकारिणीं दवदन्तीमुपलक्ष्य सहर्षो बभूव। उत्थाय दवदन्तीं
मति। एवमुक्तश्च—'देवि! तव का एषा दुःस्थाऽवस्था जाता।
ह्यं वर्तते यदद्यापि जीवन्ती दृष्टा।' ततो विस्मृतक्षुधादुःखो
चन्द्रयशासमीपे। एवं भणितम्—'देवि! वर्द्धाप्यसे, तव दान-
ल्यां दवदन्ती वर्तते। तच्छ्रुत्वा तत्रागता चन्द्रयशा देवी दवदन्तीं
गाढमालिङ्गति। चन्द्रयशयोक्तम्—'धिग् धिग् मां ययेदृगवस्था
ोपलक्षिता। ततो वत्से! आत्मानं गोपयित्वा त्वयाऽहं कथं
ता। ततो [illegible] किं त्वया नलो मुक्तः? किं वा नलेन त्वं मुक्ता?
त्वं नलस्त्वया मुक्तः। यदि त्वमपि व्यसनपतितं पतिं परित्य-
ततो [illegible] रविः पश्चिमदिशाया उदेति। हा नल! न लज्जसे
[illegible] परित्यजन्। किं नल! एतत्कुलोचितम्?
। तव [illegible] गृह्णामि। क्षमस्व ममापराधं यन्नोपलक्षितासि
[illegible] वत्से! [illegible] कथं जाता?'

ाजनिष्ठीवनेन चन्द्रयशया दवदन्त्या भालपट्टं परामृष्टम्।
तोऽर्क इव, अनलोत्तीर्णं सुवर्णपिण्डमिव दवदन्त्या भाले
स्फुरितकान्तिर्बभूव। अथ चन्द्रयशया निजकराभ्यां स्नानं
दिव्यवस्त्राणि परिधाप्य राज्ञः समीपे नीता दवदन्ती।
ादवदन्त्यौ द्वे अपि राज्ञा सहोपविष्टौ। इतश्च तस्मिन् समये
तं गतः। तिमिरेण कज्जलेनेव भाजनं गगनमण्डलं भरितम्।
राजसभामध्ये तिमिरं न स्फुरति। ततो राज्ञोक्तम्—'निश्चितं
तमितः। अत्र सभायां दीपो नहि ततः किमत्रोद्योतः?' ततो
ा भालतिलकं दर्शितं चन्द्रयशादेव्याः। ततः कौतुकेन राज्ञा
ेण तिलकमाच्छादितम्। ततो गिरिगुहेव तिमिरनिर्भरा जाता
ा। पाणिमपसार्य राज्ञा दवदन्ती राज्यभ्रंशादिवृत्तान्तं पृष्टा।
नतमुखया रुदत्या दवदन्त्या सकलोऽपि राज्यभ्रंशादिवृत्तान्तः
। राज्ञा निजोत्तरीयवस्त्रेण तस्या नयने परामृशता उक्तम्—
मा रुदिहि। सुरासुरेष्वपि प्रभवति विधिः।' अत्रान्तरे
करणतेजसाऽमरेण सभायामागत्य कृताञ्जलिना भणिता दव-
'अहं तवादेशेन पिङ्गलनामा चौरः। चरित्रं गृहीत्वा विहरन्
रे गतः। तत्र श्मशाने कायोत्सर्गे स्थितः चितावैश्वानरेण
ो धर्मध्यानपरमेष्ठिमन्त्रं स्मरन् पूर्वपापानि निन्दन् मृतो देवी
अवधिज्ञानेन पूर्वभवं ज्ञात्वा जीवितरक्षणेन प्रव्रज्यादापनेन
ारिणीं द्रष्टुमागतः। ततस्त्वं चिरं नन्द।' तत सप्त काञ्चन-
प्रवृष्य गतो देवः स्वस्थानमेवं देवानुभूतं सुकृतफलं विलो-
त्यऋतुपर्णो राजा प्रपन्नो जिनधर्मम्। इतश्च कियद्दिना-
ाद्भुकेन ऋतुपर्णो राजा एवं विज्ञप्तः—'देव! विसर्जय दव-
ातृगृहे।' चन्द्रयशया उक्तम्—'एवं भवतु।' ततः ऋतुपर्णेन
ासर्जिता चतुरङ्गसेनाकलिता चलिता दवदन्ती। आगच्छन्तीं
ं श्रुत्वा स्नेहतन्तुसन्दानितो निर्गतः पुष्पदन्तीसहितो
ो राजा। ततो दूरादपि निजपितरौ दृष्ट्वा वाहनं त्यक्त्वा पित्रोः
पात दवदन्ती। तेषां चिरान्मिलितानां नेत्रजलेन निपतता
महीतले कर्दमं जातम्। यमुनेव गङ्गां जननीमालिङ्गय दव-

१. प्रवृष्य A.

। जननीकण्ठे लगित्वा विमुक्तकण्ठं चिरं रोदिति। ततो मुख-
ानि प्रक्षाल्य अखिलमपि सुखदुःखं कथयति। अथ पुष्पदन्ती
न्तीम् उत्सङ्गे आरोप्य भणति—'वत्से! यदि त्वं जीवन्ती दृष्टा
स्माकं पुण्यं जागर्ति। अस्मद्गृहे तिष्ठन्ती सुखेन निजपतिं विलो-
ष्यसि।' ततो भीमरथराज्ञा परितुष्टेन हरिमित्राय ग्रामाणां
शतानि दत्तानि। ततो नगरमध्ये प्रवेशमहोत्सवो बभूव। सप्त
ानि यावद्विशेषतो देवगुरुपूजा कृता। अष्टमदिने भीमरथराज्ञा
दन्तीं प्रत्युक्तम्—'वत्से! तथा करिष्ये यथा तव नलसङ्गमो भवि-
ति।' इतश्च तस्मिन् क्षणे नलराज्ञा दवदन्तीं मुक्त्वा अरण्ये परि-
ता वननिकुञ्जादुद्गतो धूमो दृष्टः। क्षणान्तरेण ज्वालाकरालो
ः। ततश्च प्रसरितदह्यमानवंशत्रटत्त्रटारवो विविधश्वापदा-
हभैरवः कृतद्रुमोपद्रवः प्रदीप्तो वनदवः। तत्र 'इक्ष्वाकुकुलकमल-
ण्डमण्डल नल! मां रक्ष।' इति शब्दो नलेन श्रुतः। ततश्च
कारणकरुणाप्रधानत्वेन शब्दानुसारतो गच्छन् 'रक्ष रक्ष' इति
न् महाभुजङ्गमो दृष्टो नलेन। 'अयं मम नाम कुलं वा कथं जानाति?
वा सर्पस्येति मानुषी भाषा कथं भवति?' इति विस्मितचित्तेन
आकर्षणार्थं निजमुत्तरीयवस्त्रं क्षिप्तं नलेन। तद् भूमौ लग्नं निज-
गेन वेष्टितं सर्पेण। रज्जुरिव कूपादाकृष्य निस्तृणे प्रदेशे धर्तुकामो
ो दष्टः करे। तं सर्पं भूमितले परिक्षिप्य नलेन भणितम्—'त्वया
ज्ञेन साधु कृतं यन्ममोपकारिण एवमुपकृतम्। निश्चितं तत् सत्यं
क्षीरं पाययति सोऽपि तव जात्या दृश्यते।' एवमुक्तवतो नलस्य
सर्पता सर्पविषेण क्षणेन कुब्जं वपुर्बभूव। पिशाच इव कपिलकेशः
भ इव सूक्ष्मपाणिपादः गणपतिरिव लम्बोदर एवंविधरूपो नलो
भूव। ततश्च बीभत्ससर्वगात्रमात्मानं विलोक्य नलेन चिन्तितम्—
हो! अनेन रूपेण मुधा मम जीवितम्, ततः परलोकोपकारिणीं
क्षां गृह्णामि' इति चिन्ताप्रपन्नस्य नलस्य सर्परूपं त्यक्त्वा देवः प्रकटी-
भूव। उक्तश्च—'राजन्! विषादं मुञ्च। अहं निषधनामा तव पिता।
दा तव राज्यं दत्त्वा दीक्षां प्रतिपद्य मृत्वा ब्रह्मदेवलोके देवत्वेनोत्पन्नः।
वधिज्ञानेन मया तवैषाऽवस्था ज्ञाता। ततो मया मायया सर्परूपं
त्वा दुर्दशापतितस्य शरीरं विरूपं विहितं तत् त्वया कटुकौषध-

। चिन्तयितव्यं यतस्त्वया सर्वेऽपि राजानः किङ्करीकृताः ।
ारूपत्वेनानुपलक्षणीयं त्वां नोपद्रविष्यन्ति । साम्प्रतं दीक्षा-
मपि मा कुरु । अद्यापि भोक्तव्या त्वया सकलापि मही ।
तव चारित्रसमयं कथयिष्यामि । तथाच एतद् बिल्वमेनां
ोडकां च गृहाण । एतद् द्वयं यत्नेन धार्यं यदा पुनः स्वरूप-
ा तदैतद् बिल्वं स्फोटनीयम् । तस्य मध्ये देवदूष्यानि, रत्न-
का उद्घाटनीया, तत्र हारप्रमुखान्याभरणानि द्रक्ष्यसि । तैर्देव-
ारणैश्च परिहितैर्निजरूपं प्राप्स्यसि ।' इतश्च नलेन देवसमीपे
ावृत्तान्तः पृष्टः, तेन देवेन सतीत्वप्रधानः सर्वोऽपि वृत्तान्तः
। भणितो देवेन नलः—'किमेवमरण्ये परिभ्राम्यसि ? यत्र
ुमिच्छसि तत्र नयामि त्वाम् ।' नलेनोक्तम्—'सुंसुमारपुरे
्।' ततश्च क्षणमात्रेण सुंसुमारपुरे नलं विमुच्य गतो देवः
ाम् । नलोऽपि तस्य नगरस्योद्याने जिनभुवने नमिनाथं नत्वा
:पुरद्वारे गतः । इतश्चोन्मूलितालानस्तम्भः पवनस्पर्शेऽपि
ासन उपरि सञ्चरतो विहङ्गमानपि करेणाकर्षयन् तरुवनं
भ्रान्तो मत्तहस्ती । तत्र दधिपर्णेन राज्ञा प्राकारमारुह्य
—'य एनं कुञ्जरं वशीकरोति तस्य यद् वाञ्छितं तद्ददामि ।'
ानोक्तम्—'कुतोऽसौ मत्तगजो यथा वशीकरोमि ।' एवं
नलस्य मेघ इव गर्जन् तत्र प्रदेशे समागतो गजः । तं प्रति
कुब्जः । गजशुण्डापातवञ्चनाकुशलेनाग्रतः पृष्ठतः पार्श्वतः
। नलेन परिश्रमं नीतो गजः । गरुड इवोत्प्लुत्य तस्य स्कन्ध
कुब्जः । पूर्वासने उपविश्य पृष्ठिप्रदेशे चरणौ प्रक्षिप्य कुम्भ-
ोटयाऽऽहतो गजः । ततो लोकेन जयारव उद्घुष्टः । राज्ञा
ाकूलं दत्तम् । वशीकृत्वा नलेनालानस्तम्भे नीतो गजः । ततो
ीर्य दधिपर्णस्य प्रणाममकृत्वाऽऽसन उपविष्टो नलः । राज्ञा
ानोक्तम्—'भोः कुब्ज ! हस्तिशिक्षाविचक्षण ! अन्यदपि
ज्ञानमस्ति ?' कुब्जेनोक्तम्—'यदि सूर्यपाकां रसवतीं द्रष्टु-
ि ततः करोमि ।' ततो राज्ञा समर्पिता रसवती सामग्री
। सूर्यातपस्थालीं मुक्त्वा सूर्यविद्यां स्मरता कुब्जेन कृता
रसवती । कल्पवृक्षदत्तामिव मनोज्ञां तां रसवतीं सपरिवारो
् राजा । ततो दधिपर्णराज्ञोक्तम्—'अहो रसवत्याः पाकप्रकर्षः !

अहो रसमाधुर्यम् ! अहो विशेषपेशलता ! अहो सर्वेन्द्रियोपकारत्वम् ! ईदृशीं रसवती नल एव जानाति । नलं सेवमानस्य मम चिरपरिचिता एषा । ततः किमहो कुब्ज ! नलस्त्वम् ? अथवा ईदृशो विरूपो नलो न सम्भाव्यते ? अथवा द्वियोजनशतान्तरितस्यागमनं कुतः ? अथवा तस्य भरतार्द्धस्वामिन एकाकित्वं कुतः ? ततस्तुष्टेन राज्ञा कुब्जस्य वस्त्रालङ्करणानि दत्तानि । टङ्कलक्षं ग्रामाणां च पञ्चशतं राज्ञा दत्तम् । शेषं सर्वमपि गृहीतं ग्रामाणां पञ्चशतानि न गृहीतानि। राज्ञा कुब्जं प्रत्युक्तम्—'तवान्यदपि किञ्चित्प्रदीयताम् ।' कुब्जेनोक्तम्-'यद्येवं ततो निजराज्ये आखेटकश्च मद्यश्च निवारय।' राज्ञापि तस्य वचनबहुमानतस्तथैव कृतम् । अन्यदा दधिपर्णराज्ञा कुब्जः पृष्टः—'कस्त्वम् ? कुतो वाऽऽगतः ?' कुब्जेनोक्तम्—'कोशलायां नगर्यां नलराज्ञो हुण्डिकनामाऽहं सूपकारः । तस्य नलस्य समीपे मया कलाः शिक्षिताः । नलः कूबरेण द्यूतराज्यं जितः । दवदन्तीं गृहीत्वा प्राप्तोऽरण्ये । तत्रैवारण्ये नलो विपन्नः । ततः कारणादहं तव समीप आगतः । पुनरगुणज्ञस्य कपटकूटस्य कूबरस्य समीपे न स्थितोऽहम् ।' ततो दधिपर्णनरेन्द्रो नलस्य मरणवृत्तान्तं श्रुत्वा तं शोकं प्राप्तो यः कथयितुमपि न शक्यते । अन्यदा दवदन्त्याः पितुः समीपे केनापि कारणेन दधिपर्णराज्ञा दूतः प्रेषितः । भीमेन राज्ञा सत्कारितः। कदाचित्प्रस्तावे भीमराज्ञोऽग्रे दूतेनोक्तम्—'मम स्वामिनः समीपे नलसूपकारोऽस्ति । नलोपदेशात्स सूर्यपाकां रसवतीं जानाति।' तच्छ्रुत्वा दवदन्त्या पिता उक्तः—'तात ! चरं प्रेष्य जानीहि कीदृशोऽस्ति सूपकारः । नलं विना न जानाति कोऽप्यन्यः सूर्यपाकां रसवतीम् । यदि पुनर्गोपितात्मा नलो भवेत् ।' ततः स्वामिकार्यकुशलः कुशलो नाम विप्रो दधिपर्णसूपकारस्य रूपज्ञानकृते राज्ञा भीमेन प्रहितः । कुशलविप्रः सुंसुमारपुरे गतः । परं शुभशकुनैर्द्विगुणितोत्साहो जातः । कुब्जं दृष्ट्वा निषण्णो विषण्णश्च चिन्तयति—'कुत्र नलो दिव्यरूपः ? कुत्रायं कुब्जः ? यन्मेरुसर्षपयोरन्तरमेतयोर्नलकुब्जयोस्तदेवान्तरम् ।' ततः कुशलश्चित्ते किमपि सम्प्रधार्य नलपरीक्षार्थं दोधकगीतं गायति—

निघुणनिठ्ठुरकापुरिसु इक्क जि नलु नहुं भंति।
मुक्क गहासइ जेण वणि निसि सुत्ती दवदंती ॥ ५ ॥

ततो गीतं पुनः पुनर्गीयमानं श्रुत्वा दवदन्तीं स्मरन् गलदश्रु-
ो नलो रोदिति। कुशलेनोक्तम्—'भोः कुब्ज! कथं रोदिषि?'
जेनोक्तम्—'करुणारससम्पूर्णं तव गीतं श्रुत्वा रोदिमि।' कुब्जेन
: कुशलो गीतार्थम्। ततो नलद्यूतादारभ्य कुण्डिनपुरे दवदन्ती-
नपर्यन्तं कुशलेन कथा कथिता। पुनरप्युक्तं कुशलेन—'भोः
ज! दधिपर्णराज्ञो दूतेन भीमराज्ञोऽग्रे त्वं सूर्यपाकरसवतीकारः
थेतः। सूर्यपाकरसवतीसमर्थो नल एव' इति चिन्तयन्त्या दव-
या जनकमभ्यर्थ्य तव विलोकनार्थमहं प्रेषितः। त्वां दृष्ट्वा मया
न्ततम्—'कुत्रात्यर्थं कुरूपः कुब्जः? कुत्र सर्वाङ्गोपाङ्गपेशलो नलः?
दलितमत्स्यकुटुम्बको बकः? कुत्र वा कृतजनानन्दश्चन्द्रः? तव
नं प्रत्यागच्छतो मम शुभशकुनसङ्घातः सञ्जातः। सोऽपि निष्फलो
व यत्त्वं न भवसि नलः। ततो दवदन्तीप्रेमपरवशेन कुब्जेन
गृहे नीतो विप्रः। यतः—

जत्थ जणो वसइ पिउ तीए दिसाए समागउ संतो।
काउवि कुणइ हरिसं किं पुण पिय पेसिउ पुरितो ॥ ६ ॥

कुब्जेनोक्तम्—'भो विप्र! महासत्या महापुरुषस्य नलस्य
श्रावणेन तव किं स्वागतं क्रियताम्?' इत्युक्त्वा भोजनादिसामग्री
कुब्जेन। दधिपर्णदत्तमाभरणं सर्वं विप्राय दत्तम्। ततश्च
लेन कुशलः सम्प्राप्तः कुण्डिनपुरम्। भीमराज्ञोऽग्रे मत्तगजवशी-
णमूलः सर्वोऽपि कुब्जवृत्तान्तः कथितः। दवदन्त्या उक्तम्—
! निश्चितं स नल एव केनाप्याहारदोषेण वा विरूपो जातः।
करिशिक्षाकुशलत्वं सूर्यपाककरणसामर्थ्यम् अत्यद्भुतं च
नलं विनाऽन्यस्य नास्त्येव। ततः केनाप्युपायेन तं कुब्जमिहानय
तस्य स्वयमेव परीक्षां करोमि।' भीमराज्ञा उक्तम्—'वत्से!
कं स्वयंवरं श्रुत्वा त्वरितमागमिष्यति यदि स कुब्जो नलो
ष्यति। ततस्त्वामन्यस्मै दीयमानं श्रुत्वा न सहिष्यते। तेन दधि-
सह समेष्यति। तथा च तुरङ्गमहृदयज्ञोऽस्ति नलः। यदि स
ो नलो भविष्यति ततो रथतुरङ्गमप्रेरणेन ज्ञातव्यः। आसन्नं

देवसं कथयिष्यामि यदि तत्र कुब्जो वेगेन समेष्यति। ततो नेश्चितं नल एव सः। अन्योऽपि स्त्रीपराभवं न सहते किं पुनर्नल-नरेन्द्रः।' ततो भीमेन दधिपर्णस्य दूतः प्रेषितः। तेन चैत्रशुदि-पञ्चम्यां दवदन्तीस्वयम्वरः कथितः। दधिपर्णेन चिन्तितम्—'ममाभिलषणीया दवदन्ती। परं दूरदेशे वर्तते। प्रभाते पञ्चमी। तत्र गन्तुं न शक्यते। तावत्किं करोमि? चिन्तापरवशो मत्स्य इव स्तोकजलेऽरतिं प्राप्तो दधिपर्णः।' कुब्जेन चिन्तितम्—'दवदन्ती महासती अन्यं वरं न वाञ्छति। कदापि यदीच्छति तथापि मयि विद्यमाने तां को गृह्णाति? ततो दधिपर्णं षड्भिः प्रहरैर्नयामि। तत्र यथाऽनेन सह ममापि प्रसङ्गेन गमनं भवति।' ततः कुब्जेनोक्तो दधिपर्णः—'एवं किं त्वं ताम्यसि? कारणं कथय, अकथितरोगस्य रोगिणश्चिकित्सा न क्रियते।' राज्ञोक्तम्—'भोः कुब्ज! कृतसुरपुरप्रवेशमङ्गलो नलो बभूव। दवदन्ती पुनरपि प्रभाते स्वयम्वरं करिष्यति। मम दवदन्तीलाभाभिलाषोऽस्ति। ततो विदर्भा दूरे, षडेव प्रहरा अन्तरे। बहुभिर्दिवसैर्दूतः समागतः। अहं पुनरियता कालेन कथं गमिष्यामीति चिन्तया निर्वृतिं न प्राप्नोमि।' कुब्जेनो-क्तम्—'राजन्! मा कुरु चिन्ताम्, जात्यतुरङ्गमसहितं ममार्पय रथं यथा प्रभाते त्वां कुण्डिनपुरं नयामि।' 'अयं न सामान्यपुरुषः किन्तु विद्याधरः सुरो वा' इति विचिन्त्य जात्यतुरगयुक्तोऽर्पितो रथो राज्ञा। तं रथं प्रगुणीकृत्य नलेन दधिपर्णो भणितः—'राजन्! रथ-मारोह।' ततो राजा स्थगिकारः, छत्रधरः, द्वौ चामरधरौ, तस्मिन् रथे एते पञ्चारूढाः षष्ठः कुब्जश्च। तद् बिल्वं च करण्डिकां च कटीतले वस्त्रेण बद्ध्वा कृतदेवगुरुस्मरणस्तुरङ्गमान् खेटयति कुब्जः। ततो हयहृदयज्ञेन नलेन प्रेर्यमाणतुरङ्गमो रथो गन्तुं प्रवृत्तः। इतश्च रथवेगपवनोद्धूतो दधिपर्णस्य पटः पतितः। दधिपर्णेनोक्तं कुब्ज-स्याग्रे। कुब्जेनोक्तं विहस्य—'राजन्! कुत्र तव पटः? पटपतनाद् योजनानां पञ्चविंशती रथः समागतः।' ततो विस्मितेन दधिपर्णेनाग्रे विभीतकवृक्षं दृष्ट्वा कुब्जं प्रत्युक्तम्—'भोः कुब्ज! अत्र विभीतके यावन्ति फलानि तिष्ठन्ति तान्यगणयन्नहं तेषां संख्यां जानामि।' कुब्जेनोक्तम्—'तर्हि दर्शय कौतुकम्।' राज्ञोक्तम्—'साम्प्रतं काल-विलम्बो भवति वलमानस्तव कौतुकं दर्शयिष्यामि।' कुब्जेनोक्तम्—

न्! मा बिभेहि। मया सारथिना कालविलम्बो न भविष्यति। मुष्टिप्रहारेण सर्वाणि फलानि तवाग्रे पातयामि। पातय त्वं नि। आश्चर्यं विलोकय। फलानामष्टादशसहस्रं तिष्ठति।' ततो प्रहारेण पातितानि कुब्जेन। दधिपर्णेन गणितानि यावन्ति तानि तावन्त्येव। ततः प्रार्थितेन कुब्जेन दधिपर्णस्याश्वहृदय- दत्ता। स्वयं दधिपर्णात् फलसंख्याविद्या गृहीता। प्रभाते डनपुरासन्ने गतो रथः। दधिपर्णो विकसितमुखकमलो जातः। न्तरे दवदन्त्या रात्रिविरामे स्वप्नो दृष्टः। पितुरग्रे कथितं 'यन्मया निर्वृतिदेवी दृष्टा। तया गगनमार्गे कोशलोद्याने आनीता। ततो वचनेन पुष्पफलकलितम् अहं सहकारवृक्षम् आरूढा। मम देव्याः प्रधानफलं समर्पितम्। तस्मिन्क्षणे पूर्वं रूढो विहङ्गमः तः।' भीमेनोक्तम्—'पुत्रि! त्वया उत्तमः स्वप्नो दृष्टो या निर्वृति- स तव पुण्यराशिरुदितः, यत्कोशलोद्यानं तत् कोशलाराज्यम्, हकारारोहणं तन्नलसङ्गमकारणम्, यत्पूर्वारूढविहङ्गमपतनं बरस्य राज्यभ्रंशः, यत्प्रभाते दृष्टः स्वप्नस्तत्तवाद्यैव नलो मिलि- ।' तदानीमेव दधिपर्णः पुरद्वारे समागतः। मङ्गलाभिधानपुरु- गत्य भीमस्याग्रे निवेदितो दधिपर्णः। भीमेन मित्रमिवालिङ्गितो । समर्पितः प्रवरावासः। भोजनादिप्रतिपत्तिं कारापय भीमेन दधिपर्णः 'तव सूर्यपाकसूपकारोऽस्ति तं दर्शय मम।' ततो पर्णेन रसवतीकरणार्थं कुब्जः समादिष्टः। कुब्जेनापि तत्क्षणादेव वती कृता। दधिपर्णोपरोधेन भीमः सपरिवारस्तां रसवतीं वान्। ततो दवदन्त्या तस्यास्वादपरीक्षार्थं भक्तपूरितं स्थालमानाय्य म्। 'रसास्वादनान्निश्चितमयं कुब्जो नल एव' इति भणितं दव- ा। पूर्वं ज्ञानिना गुरुणा मम कथितम्—'भरतक्षेत्रे नलं विना- े न जानाति सूर्यपाकां रसवतीम्। ततो निश्चितमयं नल एव, नरयं कुब्जस्तत् केनापि कारणेन भवितव्यम्। नलस्यैका परीक्षा वती, द्वितीयाप्यस्ति। अहं नलाङ्गुल्या स्पृष्टाप्युत्पुलकिता भवामि। ऽङ्गुल्या स्पृशतु मां कुब्जः। यदि पुनरेषापि परीक्षा मिलति निश्चितमयं कुब्जो नल एव।' ततः कुब्जः पृष्टः—'भोः कुब्ज! त्वं नलः?' तेनोक्तम्—'कुत्र विस्तीर्णवक्षःस्थलो नलः। कुत्राहं

जननयनदुःखोद्यतः कुब्जः ?' तथापि गाढोपरोधेन दवदन्त्या वक्षःस्थलं निजाङ्गुल्या स्पृष्टम् । तावन्मात्रेणाप्यङ्गुलीस्पर्शेन विहितहर्षोत्कर्षेण कर्कोटकमिवोत्कण्टकितं दवदन्त्या वपुः । तदा त्वयाऽहं सुप्ता मुक्ता, साम्प्रतं प्राणनाथ ! दृष्टोऽसि त्वं कुत्र गमिष्यसि ? इति भणन्त्या तया नीतो गृहाभ्यन्तरं नलोऽभ्यर्थितश्च—'स्वरूपं प्रकाशय।' ततो बिल्वात् करण्डकाद् वस्त्राभरणानि परिधाय स्वरूपो जातो नलः । तं दृष्ट्वा हृष्टचित्ता दवदन्ती वल्ली पादपमिव सर्वाङ्गं गाढमालिङ्गति । भीमेनापि ज्ञात्वा नलो निवेशितो निजसिंहासने । 'त्वं स्वामी, समादिश किं करोमि' इति भणन् कृताञ्जलिरग्र उपविष्टो भीमः । दधिपर्णेन विज्ञप्तो नलः—'त्वं नाथोऽसि, यदज्ञानात्तवानुचितं मया विहितं तत्क्षमस्व ।' दवदन्त्याऽऽकारितः समागतः ऋतुपर्णो राजा चन्द्रयशासमेतः । तथा च तापसपुरस्वामी वसन्तः श्रीशेखर आकारितः । भीमेन तेषां प्रतिपत्तिः कृता । अन्यदा भीमसभायां सर्वेषामुपविष्टानामेको देवः समागतः । तेन कृताञ्जलिना भणिता दवदन्ती—'अहं तापसानां कुलपतिः त्वयैव प्रतिबोधितो जिनधर्मप्रभावेण मृत्वा सौधर्मे देवो बभूव' इति कारणात् सप्तकोटीः प्रवृष्य गतः स्वस्थानम् । भीमरथऋतुपर्णवसन्तप्रमुखैर्महीनाथैर्मिलित्वा नलो राज्येऽभिषिक्तः । ततो नलादेशेन तैः सर्वैर्निजबलैः परिवृतो गर्जमानमदमत्तमतङ्गजस्तुरगखुरक्षतक्षोणिरेणुरुद्धनभस्तलो रथचक्रचीत्कारोत्कम्पितारिचक्रकर्णयुगलो नलः प्राप्तोऽयोध्यापरिसरे । नलं समागतं श्रुत्वा महासन्तापकवलितकलेवरः कूबरो बभूव । दूतमुखेन नलेन कूबरस्य कथापितम्—'मया सह युध्यस्व तव लक्ष्मीर्मम भवतु, अथवा मम लक्ष्मीस्तव भवतु । अथ कूबरेण निर्घूतं प्रारब्धं युद्धभीतेन । ततश्च पुण्यपरिभूतेन नलेन सर्वं हारापितः कूबरः । ततो नलेन क्रूरोऽपि कूबरो 'मम लघुबन्धुः' इति कारणात् पूर्वमिव युवराजपदे कृतः । ततो निजराज्यं लब्ध्वा दवदन्तीसहितो नलो राजा उत्कण्ठितोऽयोध्याचैत्यानि नमस्करोति । कृतविविधप्राभृतैर्नरेन्द्रैर्नलो नमितपदकमलो भरतार्द्धराज्यं बहूनि वर्षसहस्राणि करोति । अन्यदिने स्वर्गान्निषधदेवो विषयसुखसेवा-

१ प्रमुष Z.

प्रथिलं नलं प्रत्येवं भणति—'रागादितस्करैर्लुण्ठ्यमानं विवेक-
वं य आत्मनोऽपि न रक्षसि ततस्त्वं पुरुषो न भवसि। प्रव्रज्या-
ं तव कथयिष्यामि यन्मया पूर्वं तवोक्तं ततः साम्प्रतं संयमं
ण' इत्युक्त्वा देवः स्वस्थाने गतः। इतश्च तत्र जिनभद्रनामाऽऽ-
ं ज्ञानयुक्तः समागतः। ततो दवदन्तीसहितो नलस्तस्य वन्द-
गतः। तं वन्दित्वा धर्मं श्रुत्वा राज्ञा पृष्टम्—'भगवन्!
भ्यां पूर्वभवे किं सुकृतं विहितं यदीदृशं राज्यं प्राप्य हारितं
प्राप्तं च।' गुरुणा भणितम्—"अत्रैव जम्बूद्वीपे भरतक्षेत्रेऽष्टा-
र पर्वतस्य समीपे संगरं नामास्ति नगरम्। तत्र मम्मणो नाम
। तस्य वीरमती प्रिया। अन्यदा वीरमतीसहितेन राज्ञाऽऽ-
ार्थं गतेन सार्थेन सह गच्छन्मुनिरेको दृष्टः। 'अयमाखेटक-
कारी ममाशकुनम्' इति चिन्तयता तेन मुनिः सार्थाद् धृतः।
र्थं निजगृहे नीतः। द्वादश घटिका यावद् विडम्बितो मुनिः।
ःपृष्टो द्वाभ्याम्—'कस्त्वम्? कुतो वा समागतः? कुत्र चलितो-
?' मुनिना भणितम्—'रोहीतकपुरादष्टापदपर्वते जिनबिम्बानां
नार्थं सार्थेन सह चलितोऽहम्।' एवं मुनिवचनं श्रुत्वा तयोः
ा विगलितः। तयोर्भद्रकभावं ज्ञात्वा मुनिना तयोरग्रे जीवदया-
नो धर्मः कथितः। ततस्तयोः किञ्चिद् धर्मपरिणामो बभूव।
ां भक्तपानदानेन प्रतिलाभितो मुनिः। कियत्कालं स्थापयित्वा
श्रुत्वा विसर्जितो मुनिरष्टापदे गतः। एवं साधुसंसर्गात्प्रति-
भ्यां यत्नेन श्रावकव्रतं पालितम्। अन्यदा वीरमती धर्मस्थिरी-
ार्थं शासनदेवतयाऽष्टापदपर्वते नीता। तत्र निजजीवप्रमाणयुक्ता
धरत्नघटिताः सुरासुरविनिर्मितमहिमा अर्हत्प्रतिमा दृष्ट्वा परम-
ोषं गता वीरमती। सा प्रतिमा वन्दित्वा आगता निजनगरम्।
त्र वीरमती 'महत्तीर्थं मया वन्दितम्' इति श्रद्धया जिनं जिनं
आचाम्लानां[1] चतुर्विंशतिं करोति। उपरिनिवेशितमाणिक्य-
हराणि कनकविनिर्मितानि चतुर्विंशतिजिनप्रतिमानां योग्यानि
कानि कारयति। अन्यदिने वीरमती अष्टापदगिरौ सपरिवारा
ा जिनानां स्नपनविलेपनप्रमुखां पूजां करोति। जिनप्रतिमानां

1 आचारं म्लानां Z.

ललाटेषु महाभक्त्या तानि तिलकानि ददाति । तत्र तीर्थे आगतानां चारणश्रमणादीनां यथायोग्यं दानं दत्त्वा वीरमती तपस उद्यापनं करोति । मनुष्यभवं कृतकृत्यं विभवं सफलं जीवितं कृतार्थं मन्यमाना वीरमती पुनरपि निजनगरे समागता इति जिनधर्मं कुर्वाणयोः बहुकालोऽतिक्रान्तः । आयुःक्षये मृत्वा द्वावपि सौधर्मे देवदेवीत्व उत्पन्नौ । ततो मम्मणजीवोऽत्रैव भरते बहुलीनाम्नि देशे पोतनपुरे धम्मिल्लासस्याभीरस्य रेणुकाया उदरे उत्पन्नः । तस्मिन् जाते धन्य इति नाम कृतम् । वीरमतीजीवो देवलोकाच्च्युत्वा धन्यस्य गृहिणी धूसरी नाम्नी बभूव । धन्यो निजमहिषीर्बाह्ये गत्वा चारयति । अथ वर्षाकाले समागते, मेघेषु वृष्टिं कुर्वत्सु शिरस उपरि छत्रं धृत्वा महिषीणां चारणार्थं धन्योऽरण्ये गतः । तत्र तेन तीव्रतपःकृशो निश्चलः कायोत्सर्गेण स्थितो मुनिर्दृष्टः । ततो धन्येन मेघे वर्षति मुनेः शिरसि महाभक्त्या छत्रं धृतम् । ततो मुनिं नमस्कृत्य धन्येन भणितम्—'कुतस्त्वमत्रागतः ?' मुनिनोक्तम्—'अहो महानुभाव ! अहं पाण्डुदेशादागतः । लङ्कां प्रति चलितः । तत्र गुरून् वन्दितुं यामि । सप्तरात्रं वर्षता मेघेन रुद्धः ।' धन्येनोक्तम्—'स्वामिन् ! पङ्कविषमा पृथ्वी । ततो नगरमध्ये ममैनं महिषमारुह्य मम गृहं समागच्छ ।' मुनिनोक्तम्—'अहो महानुभाव[1] ! साधूनां वाहनारोहणमयुक्तम् ।' ततो धन्येन सहितो मुनिर्नगरमध्ये समागतः । ततो गृहे नीत्वा धन्येन दुग्धेन पारणं कारितो मुनिः । धूसरीसहितेन धन्येन मुनिसमीपे श्रावकत्वमङ्गीकृतम् । तत्रैव पोतनपुरे वर्षाकालं स्थितो मुनिः, पश्चादन्यत्र गतः । धन्यो धूसरी च चिरकालं श्रावकत्वं पालयित्वा चारित्रं गृहीत्वा सप्तवर्षचारित्रं पालयित्वा द्वावपि मृत्वा चतुर्थे भवे हिमवन्तक्षेत्रे युगलत्व उत्पन्नौ । ततो धर्मं कृत्वाऽन्ते मृत्वा पञ्चमभवे सौधर्मदेवलोके धन्यः क्षीरडिण्डीरनामा देवो बभूव । धूसरी तत्रैव देवलोके तस्य भार्या क्षीरडिण्डीरदेवी बभूव । ततो धन्यस्य जीवो देवलोकाच्च्युत्वा त्वं नलो जातः । धूसरीजीवो देवलोकाच्च्युत्वा एषा तव भार्या दवदन्ती बभूव । यत्पूर्वभवे मुनिदानं दत्तं श्रावकत्वं च कृतं तस्य फलेन देवत्वं राज्यत्वं च प्राप्तम् ।

---

1 महानुभावाः Z.

ा दवदन्ती तस्य धर्मस्य प्रभावेण तव भार्या बभूव। यत्पूर्वभवे अष्टा-
ारौ चतुर्विंशतिजिनानां पूजापूर्वं रत्नमाणिक्यतिलकानि दत्तानि
प्रभावेण ललाटपट्टे सूर्यबिम्बसमानं स्वाभाविकं तिलकं बभूव।
ाभवे द्वादश घटिकाः सार्थाद् वियोजितो मुनिस्ततो द्वादश-
ेण युवयो राज्यभ्रंशो बभूव।" इति गुरुवाक्यं श्रुत्वा वैराग्यपरो
निजपुत्रं पुष्कलनामानं निजराज्ये निवेश्य दवदन्त्या सहितो
स्तेन दीक्षां जग्राह। ततः सिद्धान्तं पठति। दुस्सहान् परीषहान्
ा। अथान्यदा नलो मुनिः कर्मवशेन भोगार्थं दवदन्त्यामनुरागं
ते। गुरुभिस्त्यक्तो निषधदेवेनागत्य प्रतिबोधितः व्रतं परिपाल-
मशक्तो नलोऽनशनं करोति। दवदन्त्यापि गृहीतमनशनम्।
मृत्वा कुबेरो जातः। दवदन्ती मृत्वा तस्य भार्या बभूव।
वृद्धिराधनाम्नीचदेवत्वं प्राप्तम्। द्वावपि कर्म क्षपयित्वा क्रमेण
यास्यतः॥

इति द्यूतविषये नलकथानकम्॥

# कथाकोशस्थपद्यानामकारादिक्रमेणानुक्रमणिका

# कथाकोशस्थसंज्ञाशब्दानामकारादि-क्रमेणानुक्रमणिका